तदप्याट् " उपनेमातिरिज्ञाने वासनानुनिरस्यते । निरस्त वासनस्यैव विज्ञानमितिदुर्भण ॥" इति। अनुपपन्नस्य तत्त्वज्ञाने श्रवणमनननिदिध्यासने क्रमात्तनिरासइतिचेत्, किन्तानितत्त्वगोचराणि उतातत्त्वगोचराणि, पूर्वत्र विपरीतवासनया सया तेषामप्यनुपपत्तिरेव। उत्तरत्रातत्त्ववासनया कथं तत्त्वज्ञानोत्पत्तिप्रतिबन्धकवासनानिरास। तथाच 'सागरगतुनामस्य हिमवद्गमनोपम।' इतिन्याय। किञ्च अभेदज्ञाने सिद्धे भेदवासनानिरासस्य किमर्थमपेक्षा। तदसिद्धौतु त त्प्रतिपक्षवासनानिरासाभिप्रायानुत्थान । नह्यभेदज्ञानप्रतीतिरभेदप्रतीति मन्तरेणस्यात्। नच प्रतीतौनुनिशयानिराशादिनेपस्य त्वया वक्तुश क्य, अभेदस्य ब्रह्मस्वरूपायमाणस्य सर्वदैकरूपत्वात्, विशेषग्रहेच भेदप्रतीतिप्रसङ्गात्। नच व्यावहारिकभेदोऽप्यास्तीति वाच्यम्, भेदवासनानिरासद्वारेणाभेदग्रहस्य परमार्थविषयत्वात्। अतो नभेदवासनानिरासद्वारेण श्रवणादित्रयस्य दर्शनोपकारकत्वमिति। यत्पुनरुक्त "ब्रह्मवेदब्रह्मैवभवति" इत्यादौ ज्ञानमात्रस्यैव मोक्षहेतुत्वं श्रूयते नहि प्रतिपन्नेर्थे नास्तिक्य न्याय्य। अतएवोच्यते "नैषातर्केणमितिरापनेया" इतीति, तदप्यसत्, सामान्यशब्दाना विशेषे

---

निवृत्ति स्यात्, यदि तावतामेकेननिवृत्तिर्नसभवति तदातावत्काल ध्याननैव तन्निवृत्तिस्स्यादितिभाव.। (अनुपपन्नइति) ध्यातव्यादिज्ञानस्या नाद्यहेतुरितिभाव। (कथमिति) प्रत्युत विपरीतवासनावर्धकत्वमितिभाव। (तदसिद्धाविति) अभेदएवतात्विकइति ज्ञानेसत्येव तद्विपरीतभेदभ्रम निरासमभिलाषोभवेत् नान्यथेति भाव (अभेदस्येति) अभेदस्य ब्र ह्मस्वरूपतया तस्यच निर्विशेषत्वात् स्वरूपेणैव तत्सदा विषयीक्रियते नतु कदाचित्किञ्चिद्धर्मविशिष्टतया, अतोतिरिक्ताकारप्रकाशरूपवैशद्य न सभवतीत्यर्थ। (विशेषेति) तथाच ब्रह्मणस्सविशेषत्व स्यादित्यर्थ। (भेदेति) भेदवासनानिरासस्साध्यस्येत्यर्थ। (ज्ञानमात्रस्येति)मात्रशब्देन अज्ञानस्य ज्ञानविशेषस्य च निरासात् क्वचिन्मतेऽज्ञानत्वात्

पर्यवसानस्य पश्वविकरणादिन्यायसिद्धत्वात् । न्यायानपेक्षत्वे किं शारीरकशास्त्रेणापि । ध्यानोपासनशब्दयोश्च ज्ञानविशेषविषयतया ज्ञानसामान्यविषयवेदनादिशब्दानां तस्मिन् विशेषशब्दार्थ एव पर्यवसानं युक्तं, विकल्पसमुच्चयफलान्तरार्थानामसंभवस्योक्तत्वात्, तदुक्तम्–
" अष्टदोषाविकल्पेस्तु गौरवंचव्यवस्थितौ । समुच्चयेऽनपेक्षास्या दंगांगित्वं न मीयते ॥ " इति । तथा विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहार दर्शनाच्च तयोरैकार्थ्यं सिद्धम् । " मनोब्रह्मेत्युपासीत " इति विहितमेवह्युपासनं " भातिचतपतिचकीर्त्या यशसाब्रह्मवर्चसेन यएवंवेद " इतिफलविधानार्थमनूद्यते । नह्यफलंविधायान्यत्सफलमनुवदितुं युक्तम्, एवं " यस्तद्वेदयत्सवेद " इति वेदनशब्दमात्रश्रावीजानश्रुतिः तदर्थं " यांदेवतामुपास्से " इत्युपासिनानुवदति । एवमन्यत्रापि । तथा " तमेवंविद्वानमृतइहभवति । नान्यःपन्थाअयनायविद्यते " " नाहंवेदैर्नतपसा " इत्यादिश्रुतिस्मृत्योर्वेदनभक्तिशब्दाभ्यां मोक्षोपायमभिधाय तदपरोपायनिषेधपरयोः परस्परार्थप्रतिक्षेपानुपपत्तेः वेदनशब्देनापि तत्र धारावदविच्छिन्नभक्तिरूपज्ञानविशेषएव विवक्षितइति स्वीकर्तव्यम् । एवं ध्यानोपासनभक्तिशब्दसमानार्थतया वेदनादिशब्दानां विशेषविषयत्वे निश्चितेसति सामान्यमात्राश्रयणं न्यायानभिज्ञतानिबन्धनम् । तदुक्तं " परोक्षागमार्थनिर्णीतो निपुणन्यायपूर्वकं । गर्दभादितुल्यत्वं गर्दभप्रायकल्पितम् ॥ " इति । यपुनर्वाक्यार्थ[illegible] वज्ञानस्य विधेयत्वं न संभवतीति तदस्माकमिष्टमेव, तत्रोत्पन्नस्यैव विधानोपपादनात् । प्रपश्चनिवृत्त्यापरिशेषणार्थमोक्षवादः, यावयार्थज्ञानमात्रेणाविद्यानिवृत्त्यदर्शनात्, आहुश्च " [illegible] स्य [illegible] । [illegible] पूर्वो [illegible] ॥ " इति । ननु [illegible], [illegible] नजाननियोगोपद्विनिषेध [illegible], [illegible], [illegible] ।

परमाचार्यस्यापि । अथ तत्त्वार्थज्ञानेन निवृत्ताविद्याणामविद्यावत्ता श्रावकाइतिचेन्न, तेषां श्रवणादिव्यापारस्य तच्चरणशरीर स्थित्यादेस्तत्प्रयोजनस्य च ख्यातिलाभपूजापरानुग्रहादेः स्वतन्त्रप्रतिभास स्य चाविद्यामन्तरेणासम्भवात् । अविद्यानिवृत्तावपि बाधितानुवृत्त्या भेद प्रतिभासात् प्रत्यक्षाद्यविरोधः प्रवचनाद्युपपत्तिश्चेतिचेन्न, भवत्पक्षे बाधितानुवृत्त्यसम्भवस्य वक्ष्यमाणत्वात् । तथाप्यविशदप्रतिपत्तिमात्रादवि द्याविशेषमात्रादेव वा प्रवचनाद्युपपत्तिरितिचेन्न, विशदप्रतीतिपरामर्श रूपप्रत्यक्षसिद्धान्तयोर्विरोधात् । विशदाभ्यधिकगमस्ततस्त्वाचार्योऽपि वासु देवादयोऽर्जुनादिभ्य उपदिशन्तीतिहि स्वीक्रियतेऽस्माभिः । न चाद्वैत सिद्धान्तप्रवक्ता स्वात्मना तदनभिज्ञतामनुमन्यते । तत्रापि विवादश्च । किञ्च प्रतिवादिनं प्रत्यविद्या कथं भवत्पक्षं प्रतिक्षिपति । न तावदविद्या स्वत, निराश्रयत्वदायोगात् । विदितचेत् कथं तर्हि प्र तिवादिनाविदिते भवत्पक्षे भवतो ज्ञानानुपपत्तिः । नहि स्वोक्तं परे जा

---

नन्ति ज्ञानविशेषत्वात् न निदिध्यासनसाध्यमित्यर्थः । (परमा चार्यस्येति) श्रवणादिविधिप्रसङ्ग इत्यर्थः । (भवत्पक्ष इति) दापयताविद्य या बाध्यतुल्यमिथ्यावागीकारादित्यर्थः । (अविद्याविशेषेति) विशद ज्ञानात्काचिदविद्यानिवृत्ता काचिन्नेति भावः । (विशदेति) गुरुमुख श्रवणेनार्थोऽविशद इति प्रत्यक्षविरोध इत्यर्थः । सिद्धान्तविरोधं विवृ णोति (विशदाभ्यधिकेति) अविद्याविशेषप्रवचनादिपक्षे दूषणमाह (न चेति) त्वमेवाज्ञानापादनेन गुरुभ्यो ह्रुत्यसि तेन स्वाज्ञानं नानुम न्यन्त इत्युपालम्भः । अज्ञानानुमतौ दोषमाह (तथात्वेति) अद्वैतस्या ज्ञाने त्वया तदसाधनान्नावयोर्विवादः स्यात् । नहि किञ्चिज्ज्ञानेऽपि क स्यचिदज्ञानस्य निवृत्त्या व्यवहारसम्भवः - पूर्वदिनेऽज्ञाननिवृत्तौ उत्त रदिनेऽज्ञानान्तरसत्त्वेऽपि व्यवहारप्रसङ्गात् प्रस्तमोनिवृत्तौ तमोऽन्तर सत्त्वेऽपि व्यवहारप्रसङ्गाच्चेतिभावः । येषामविद्यानिवृत्तिर्नास्ति तेषाज्ञा नमपि न जातमित्यन्यत परेषां प्रवचनाद्यसम्भव इत्यत इदानीं दोषान्तर माह (स्वस्थेति) ( निराश्रयेति ) निराश्रयत्वेनाज्ञानायोगादित्यर्थः ।

नन्ति वयन्तु नविद्मइति स्वसैरभिधेयं। यत्तदविद्यानिवर्तकं विश दमद्वैतज्ञानमुदेष्यति, यच्चेदानीं श्रवणादविशदमुत्पन्नं - तदुभयं भि न्नविषयमेकविषयंवा; भिन्नविषयत्वे तस्यान्यसिद्धान्तज्ञानवत्तदनुपकार कत्वम्। एकविषयत्वेप्यन्यूनानतिरिक्तविषयंवा प्रकारविशे- षविशेषितविषयंवा; आद्ये पश्चात्तनस्याप्यनिवर्तकत्वं, इदानी- न्तनस्यैववा निवर्तकत्वं स्यात्; अविशेषात्। द्वितीये ब्रह्मण- स्सविशेषत्वंस्यात्। सविशेषमिदानीं गृहीतं पश्चात्तु निर्विशेषं प्रका शिष्यतइति वैषम्यमितिचेत्; कथमिदं त्वयावगतम्। श्रुतेरितिचेत्; तर्हि श्रुतेरेव निर्विशेषज्ञानमिदानीमेव जातमिति कः पश्चात्तनस्य - विशेषः। ज्ञानमिदानीं जातं व्यवसायस्तु पश्चाद्भविष्यतीति विशेषइ तिचेन्न; वेदप्रामाण्यनिश्चये तदानीमेव व्यवसायोदयात्, तदनिश्च येतु पश्चादपि तदसिद्धेः। प्रमाणत्वाभ्युपगमेपि तदर्थविशेषसन्दे हइतिचेत्; तर्हि विशदप्रवचनप्रवीणेभ्य आचार्येभ्यो न्यायपूर्वं द्वि स्त्रिश्शतशोवा श्रोतव्यं, नपुनश्श्रवणदशायामेव सन्दिहानेन भवता

---

(तस्येति) ध्यानादिद्वारा भाविविशदज्ञानानुपकारकत्वमित्यर्थः। (इदानी- न्तनस्येति) निवृत्तस्य पुनर्निवृत्त्ययोगादित्येवकाराभिप्रायः। अविशे- षात् - स्वरूपविषयत्वाविशेषादित्यर्थः। अविशदमपि स्वरूपाज्ञाननिव र्तकं दृष्टमिति भावः। (सविशेषत्वमिति) विशदज्ञानस्य तत्प्रज्ञानत्वा दितिभावः। (कथमिति) निर्विशेषज्ञानंभविष्यतीति कथमवगतमित्य र्थः। (श्रुतेरिति) अद्वैतश्रुतेर्निर्विशेषबोधनसामर्थ्यपर्यालोचनेनेत्यर्थः। इदा नीन्तनस्यापि तादृशश्रुतिजन्यज्ञानत्वादिति भावः। व्यवसायः - अप्रा माण्यशंकाशून्यं ज्ञानं। वेदप्रामाण्यनिश्चयेपि तत्तात्पर्यसन्देहाद्व्यवसाया भावइत्याशंक्य तथापि श्रवणवेलायामेव शङ्कितताात्पर्यावधारणेन मन नादिवैयर्थ्यमित्याह (प्रमाणत्वेति) न्यायत स्तात्पर्यनिर्णयेऽपि यावद्वक्त काभासोत्थापित सन्देहनिराकरणाय ज्ञानान्तरं मननवदिति शंकते-

पश्चात्तनश्रवणेनापि ज्ञानु शक्य । मननवदाहार्यसन्देहनिराकरणाय पश्चात्तनज्ञानमितिचेन्न, मननेनैव समाश्रितनिष्कम्पत्वे पुनरन्यापेक्षा-भावात् ; अन्यथातिप्रसङ्गात् । अस्तुतर्हि पारोक्ष्यापारोक्ष्यलक्षणवैषम्य मितिचेत् ; विषयातिरेकाभावेनैव प्रागुक्तेन तदसिद्धे, सिद्धावपि बाध कत्वमबाधकत्वच प्रत्यकिंचित्करत्वात् । परोक्षेणापि शास्त्रानुमानजन्य-ज्ञानेनापरोक्षभ्रमबाधस्याभ्युपगमात्, प्रत्यक्षेणापि देहात्मभ्रमादिना-शास्त्रबाधानभ्युपगमाच्च । उत्पन्ना भ्रान्तिरनित्यत्वात्स्वयमेव निवर्तते, भ्रान्त्यनुवृत्तिनिवृत्तिस्तु कारणानुवृत्तिनिवृत्त्याभवति - तदनुवृत्तौतु बाध कस्य प्रत्यक्षत्वेपि भ्रान्त्यनुवृत्तिर्भवत्येव, चन्द्रैकत्वे प्रत्यक्षेपि अगुल्य वष्टम्भादिना भ्रान्त्यनुवृत्तिवत् । वाक्यजन्यज्ञानमपरोक्षमितिच सर्वलो कविरुद्ध, पूर्वमेवैतत्प्रपचयिष्याम । तदेतदखिल मुखान्तरेण प्रपचित भाष्ये "नतावद्वाक्यार्थज्ञान" इत्यादिनाविस्तरेण ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यामविधेयज्ञानवादभगश्चतुर्थ ॥

---

(मननवदिति) (विषयेति) प्रमाणैक्येचेतिशेषः । एकस्यापि प्रमाणस्य विषयभेदेपरोक्षापरोक्षजनकत्व दृष्ट, मनस आत्मप्रत्यक्ष वह्न्यादिस्मृतिजनकत्वदर्शनात्, विषयैक्येपि प्रमाणभेदात्तदृष्ट, यथैकत्रैव वह्नौ प्रत्यक्षानुमानाभ्या, विषयप्रमाणैक्येतु नदृष्टमित्यर्थ । ननु सहकारिवैचित्र्या दात्मस्मृतिजनकत्ववदृष्ट, अतइहापि मननादिसहकारि वैचित्र्या दपरोक्ष सभवती त्यत्राह (सिद्धावपीति) किंच किंभ्रान्तिनिवृत्त्यर्थ मपरोक्षज्ञान उततदनुवृत्तिनिवृत्त्यर्थ, आद्यआह (उत्पन्नेति) द्वितीयआह (भ्रान्तीति) ननु भ्रान्तिकारणभूताज्ञाननिवृत्त्यर्थ मितिचेन्न, परोक्षज्ञानादपि तत्सभव स्योपपादयिष्यमाणत्वात् ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावर तत्त्वयाथात्म्येन वरदैकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्याया चण्डमारुताख्यायामविधेयज्ञानवादभगश्चतुर्थ स्कन्ध ॥

श्रीमते रामानुजाय नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

अथ पञ्चमस्कन्धः ॥

स्वानुभूतेन समारोपगन्धरसादैकबाधितः ।
प्रसीदतु स मे देवः प्रथमाञ्जलिकिङ्करः ॥

यदुच्यते, तत्त्वमस्यादिवाक्यात् तत्त्वज्ञाने जातेऽपि अनादिवासनाबाधितानुवृत्त्या भेदप्रतिभासादेः शरीरमनुवृत्तिः, तदनुवृत्तावपि छिन्नमूलतया दग्धपटादिवदनर्थकत्वञ्चेति । तत्पृच्छामः, बाधिते कथमनुवृत्तिर्भवतामुक्त्या, तस्याः तत्कथम् ।

---

हृदि विनिहिते दैवाद्यत्पादपङ्कजयोर्युगे
भवति हि विधिश्रेयः पारम्पर्ये निरग्रहः ।
दुरितनिवहैर्दुर्मेदिष्ठं भवश्वससाध्वसं,
मनसि करवै वेदान्तार्यं तमन्यकथोज्झितः ॥

नैवक्षमाणि दुरितानि सकृद्यदीक्षाक्रोडीकृतं यमपि तत्क्षणविद्रुतानि । भूयस्तमीक्षितुमशेषविधपुमर्थं स्वश्रीनिवासगुरुरस्तिकृतपर्तनः ॥

(बाधितानुवृत्त्येति) इत्थंभावे तृतीया । तत्त्वज्ञानेन बाधितस्यापि भेदप्रतिभासस्य बाधितानुवृत्तिरूपेणानुवृत्तिः, न तु प्राग्वदनुवृत्तिरित्यर्थः । भेदप्रतिभासानुवृत्तौ तत्कार्यानर्थोऽपि स्यादित्यत आह (तदनुवृत्तावपीति) भेदप्रतिभासानुवृत्तावपि अविद्याया निवृत्ततया तस्या दग्धपटवत् कार्याक्षमत्वमित्यर्थः । ननु – कथं बाधानुवृत्त्योर्विरोधः, भेदमिथ्यात्वबुद्धिरूपबाधस्य भेदप्रतिभासानुवृत्तेश्चाविरोधात्, दृश्यते हि एकश्चन्द्रः नद्वाविति चन्द्रभेदमिथ्यात्वज्ञाने सत्यपि तिमिरादिवशात्तत्प्रतिभासानुवृत्तिरिति छिन्नमूलत्वोक्तिविरोधमजानानस्य शङ्कामनुवदति

प्रमाणबलान्मिथ्यात्वाध्यवसायेऽपि द्विचन्द्रादिष्विव दोषमहिम्ना प्रतिभासा नुवृत्तिरिति नविरोधइतिचेत्, समस्तद्वैतकुक्षिम्भरिणाप्यद्वैतज्ञानेनाबाधित कोऽसौदोष । अविद्यैवेतिचेत्, कथं तर्ह्यविद्यानिवृत्ति, नहि तन्निवृत्तावर्थप्रसिन कश्चिद्बाधोनाम । तन्निवृत्तावपि तन्मूलवास नास्तीतिचेत्; साकिंब्रह्मस्वरूपत्वात्तज्ज्ञानेनाबाधिता, उत मिथ्यात्वे पितदविषयत्वात् । नप्रथम — द्वैतापसिद्धान्तादिदोषप्रसंगात् । नच सानब्रह्मस्वरूपानुप्रवेशिनी, भेदप्रतिभासानुवृत्तेरनिर्मोक्षप्रसंगात्, ब्रह्मण स्नायवत्वादिदोषप्रसंगाच्च । नचासत्याविद्योपात्तावासना सत्येति सम्पद्यते । नचोपादानध्वंसे कार्यानुवृत्तिमुन्मत्तो प्यनुसन्धत्ते । नापिद्वितीय, वासनाया अपि श्रवणसमयसमधिगतब्रह्मव्यतिरेकलक्षणे कोपाग्निक्रोडीकारात, अन्यथाऽविद्याया अपि बाधकज्ञानाविषयत्वप्र संगात् । "नेह नानास्ति" इत्यादेरविशेषात्तद्विषयत्वमितिचेत्, तु ल्यम् । यदिचवाक्यार्थज्ञानाद्वासनाननिवर्तते, कुतस्तर्हितन्निवृत्ति । ननावददृष्टादे, तथासति ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसंगात् । अत

---

(प्रमाणबलादिति) अबाधित - अनिवृत्त. । माभूदविद्यानिवृत्ति, नचत- थासति बाधितानुवृत्त्यसिद्धि', मिथ्यात्वबुद्धिरेव बाधइत्यभिधानादित्य त्राह (नहीति) मिथ्यात्वबुद्धे र्बाधरूपता ह्यविद्यानिवर्तकत्वादेवेति वाच्य, अन्यथा छिन्नमूलत्वोक्तिविरोधात् । त्वत्प्रकरणपाठकाना डिंभाना मपि बाधितानुवृत्तिप्रसंगात्, जीवन्मुक्तानामेवहि सेष्यते, अतोऽविद्या, निवृत्तिपर्यवसितएव बाधइत्यर्थ । (सेति) तत्त्वज्ञान - ब्रह्मव्यतिरिक्तकृ- त्स्नमिथ्यात्वज्ञानम् । (द्वैतेति) आदिपदेन तन्मूलभेदप्रतिभासस्य स- त्यत्व गृह्यते । ब्रह्मस्वरूपानुप्रवेशा श्नोक्तदोष इत्यत्राह (नचेति) (ब्रह्मण इति) आदिपदेन विनाशित्व गृह्यते । (नचोपादानेति) वासनापि भाव कार्यतया अविद्योपादानेतिभाव' । एतेन 'संस्कारः कार्योऽपि ध्वंसइवानि रुपादान' इति निरस्त । किंच — परमते ध्वंसोपि भावरूपाज्ञानोपादानक एव । यद्वा — अत्र कार्यपदेनानुवर्तमानशरीरादिक विवक्षितम् । ननु ध्व

एतनस्वत, व्याघाताच्च । नहि वध्यघातकयोस्तादात्म्यन्दृष्टम् । नच सहकार्यन्तरमन्तरेण घटादिष्वपि स्वप्रध्वंसहेतुता । अहेतुकविनाशादेतुसौगतचार्वाकादिसौहार्दोद्गारप्रसङ्ग. । अविद्यायाश्चतद्वदेवाहेतुकनिवृत्त्यविरोधस्स्यात् । नचदहनान्त्यशब्दचरमसंस्कारादिवदिति वाच्यम्, तत्रापि तत्तदवस्थान्तरकालविशेषादिसामग्रीसाहितपरमेश्वरसकल्परूपस्य कारणस्यास्माभिरभ्युपगमात् । द्विचन्द्रादौतु अंगुल्यवष्टम्भतिमिरादिदोषस्य चन्द्रैकत्वज्ञानाविषयत्वात् तदुभयविषयैकज्ञा

---

समानस्य प्रतियोगिजन्यत्वा न्नव्याघातइत्यत्राह ( नच सहकार्यन्तरमिति ) आगन्तुकहेत्वन्तरमनपेक्ष्य स्वप्रध्वंसहेतुत्वस्य एकक्षणाधिककालवृत्तित्वस्यच व्याघातः । ( अहेतुकेति ) कार्यस्याहेतुकत्वांगीकारेच्चार्वाकमतप्रवेशः, विनाशस्याहेतुकत्वांगीकारे क्षणिकत्वप्रसंगेन सौगतमतप्रवेशइत्यर्थः । ( अविद्यायाश्चेति ) ततश्च श्रवणाद्यायासवैयर्थ्यमिति भावः । ननु क्वचि दहेतुकनिवृत्तिमात्रा न्न सर्वत्र तथाप्रसंगः, त्वयापि क्वचि दहेतुकनिवृत्तेरंगीकार्यत्वात, यथा दहनेन दाह्यनाशेसति दहननाश· स्वतएव दृश्यते, तथैव अन्त्यशब्दस्य मरणसमयानुभवजन्यसंस्कारस्यच स्वतएव नाशइत्यत्राह ( नचेति ) संस्कारादिवदित्यनन्तरं अहेतुकनिवृत्तिरिति शेष । ( तत्रापीति ) दहननाशो दहनस्य सूक्ष्मावस्थान्तरापत्ति, तद्धेतुश्च दाह्यभस्मीभावावस्था, अन्त्यशब्दनाशश्च तदातनो गगने यत्किंचिद्द्रव्यसंयोगादिः, तद्धेतुश्च प्रसिद्धएव- संस्कारनाशावस्था नरकानुभवादिः अतिरिक्ताभावपक्षे प्येतएवागन्तुकहेतव, उपान्त्यशब्दस्तन्नाशोवान्त्यशब्दनाशक । ईश्वरसंकल्पोप्यागन्तुककारणमित्याह ( ईश्वरेति ) अतस्स्वतोनिवृत्तेरसंभवा द्वाक्यजन्यमिथ्यात्वज्ञानादेवाविद्यावासनानिवृत्तिः, ततश्च नभेदप्रतिभासानुवृत्तिसंभव इतिस्थितम् । यद्येव मिथ्यात्वज्ञानेसति भेदप्रतिभासासंभव, कथंतर्हि तस्मिन्सत्यपि चन्द्रभेदप्रतिभासइत्याशंक्य वैषम्यमाह ( द्विचन्द्रादाविति ) द्विचन्द्रादौतु दोषस्याबाधइति तन्मूलभ्रमपरम्परानुवृत्तिर्घटत इत्यन्वयः । चन्द्रैकत्व चन्द्राभेदः । ( तदुभयेति ) यथा ताराप्रकाशांशस्य

नोदयेपि प्रार्थस्थतारकाप्रकाशस्येव दोषप्रकाशांशस्य चन्द्रैकत्वप्रका-
शेनविरोधाभावात् , दोषोमिथ्येतिनुज्ञानस्य लौकिकाना मनुदयात् , यौ
क्तिकमिथ्यात्वज्ञानस्यैव भ्रान्तित्वेन तत्सत्यत्वाबाधाइति तन्मूलभ्रम
परम्परानुवृत्तिर्घटते, तद्विषयान्यथात्वप्रमापेन भयनिरमपादिकार्यनि
वृत्तिश्च । तन्नतु नतथा, कारणभूताविद्यायाःकार्यभूतशोकादिनश्च,
मध्यगतभेदवासनाभेदज्ञानयोरप्येकहेलयैवनिवार्यत्वात् , अनुवृत्तावपि
बाध्यबाधकयोरविचल्वेन वास्तवप्रामाण्याभावात् विशेषेणबाधकत्वास
म्भवाच्चेति । तदेतमर्थमभिप्रेत्य " सत्यपिवाक्यार्थज्ञाने " इत्यादि
" भयादिकार्यतुनिवर्तते " इत्यन्तभाषितम् ॥

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्यकृतिषु शतदूषण्यांबाधितानुवृत्तिभङ्गवाद पञ्चम ॥

---

चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभाव , तथा दोषप्रकाशांशस्यापि
चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभावादित्यर्थ । बाधकज्ञाननिषेध्यत्वेन-
विषयस्यैव बाध्यत्वादिति भाव । कस्यचिद्दोषमिथ्यात्वज्ञानेऽपि च-
न्द्रभेदप्रतिभासोदृश्यतइत्यत्राह ( दोषोमिथ्येति ) ( यौक्तिकेति ) स्वबु
द्धिकल्पित दुर्न्यायमूल दोषमिथ्यात्वज्ञानस्य मिथ्यात्वबाधवन्निरासादेव
भ्रान्तितया दोषाणां सत्यतया न बाधइत्यर्थः । वस्तुतस्तत्पक्षेपि दोष
स्य यौक्तिकज्ञाना दनपायएवेति तन्मूलभ्रमोघटतएव, विरोधितत्वविष
यत्वेन निवर्तकत्वे अविद्यावदिदानीमेव वासनायाअपि निवृत्तिप्रसङ्गा
त्, बाध्यबाधकज्ञानयोर्मिथ्यात्वाविशेषेण वास्तवप्रामाण्यतदभावाभ्यामपि
विशेषाभावात्, बाधकज्ञानस्य बाध्यप्रतिभासापेक्षया विशेषेणदौर्बल्याच्च
पश्चादप्यनिवृत्तिप्रसंगात्एकहेलयैवनिवापत्व बाध्यमित्याह(कारणभूतेति)

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत
परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणप-
रिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन
रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां
चण्डमारुताख्यायां बाधितानुवृत्तिभङ्गः पञ्चमस्कन्धः ॥

**श्रीमतेरामानुजायनमः ।**

श्रीमतेनिगमान्त महादेशिकायनम ।

**अथ षष्ठस्कन्धः ।**

दृष्टानुश्रविकार्थजातविमुखान् पुंसोऽभिदृष्य श्रुती-
यज्ञादिर्यदुपास्तिसाधनतया साक्षाद्विनिप्राभते ।
लीलाभोगविभूतियुग्म भैरितस्वात्मप्रदानोन्मुख
श्रीमानस्तुसमे समस्तदुरितोत्ताराय नारायण ॥

यदुच्यते, " तमेतंवेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेनतपसानाशकेन" इत्यत्रयज्ञादिकविविदिषासाधनत्वेन विधीयते, नतु वेदनसाधनत्वेन, वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनाच्च, विविदिषन्तीति हिश्रूयते नपुनर्विदन्तीति । तत्रब्रूम, कोऽसौवस्तुविरोधस्तावत्, किं ज्ञानस्य यज्ञादिभिस्साधयितुमशक्यत्व, उतोपाज्ञानाङ्गभूतशमादिप्रत्य नीकत्व । यद्वा तत्वज्ञानफलापवर्गप्रत्यनीक त्रिवर्गसाधकत्व, यद्वा आश्रमाङ्गतयाविहिताना विद्याङ्गत्वे नित्यानित्यसंयोगविरोध, अन्योवा कश्चिदिति । नप्रथम, नहियज्ञादिकमन्तरेणउत्पत्तिदर्शनाद्वा यज्ञा दिसन्निधानेऽप्यनुत्पत्तिदर्शनाद्वा, आचेनसिद्धि प्राचीनेष्वर्वाचीनेषुवा धिकारिष्वननुष्ठितशुद्धधर्मेषुविद्योत्पत्तेरसिद्धत्वात् ।

---

अद्वैतिजालकलिलेन मुदीर्णदर्पमोघज्जलकरमनाहतमर्मगाथै ।
स्वामितेन निगमांतगुरो. प्रबन्धै तैर्ब्रह्मतत्वमिहन प्रतिबोधयन्तु ॥

सकलजनहितेच्छु श्रीनिवासार्यवर्यो-
हृदि निहितहितार्थे श्रेत्वर्यामातुरेष ।
कुमतिविहतवाचो नह्युपाङ्क्ष्यदस्या
श्चिरतरमविकष्टा तर्ह्यवस्थान्वयरूपत ॥

( दृष्टेति ) इहामुत्रार्थफलभोगविरक्तान् । साक्षाद्यदुपास्तिसाध नतयेत्यन्वय । ( विविदिषन्तीतिहीति ) सन्नन्तप्रकृतिधात्वर्थेन ना न्वय. उपसर्जनत्वात् । ( आश्रमाङ्गतयेति ) आश्रमप्रयोज्यतयेत्यर्थ । अनेन नित्यत्वविवक्षित । शुद्धधर्मकारणान्तराभावादिचक्षचित्स्वस्यैवानिवृत्ते

द्वितीये त्वप्रयोजकता, सामग्र्यैव हि कार्योत्पत्तिः न पुनर्हेतुमात्रात् ; सम्भवति च प्रायशः कर्मकर्तृसाधनवैगुण्यं, अन्यथा चित्रापशुफलत्वादावपि कस्तेसमाश्वासः । तस्मात्तत्साधनत्वं विदधाति श्रुतिरितिचेत् , अत्रापि यदि श्रुतिर्विदधाति तदा तद्वदेव समाश्वसिहि । अन्यथा विविदिषासाधनेऽपि त्वया न समाश्वसितव्यं, तत्रापि साध्यसाधनभावस्य श्रुत्यैकावसेयत्वात् । ' कुर्वन्नेवेह कर्माणि " इत्यादि चार्वाकदुर्वादस्य त्वयाप्य स्मर्तव्यत्वात् , व्यभिचारस्य च समत्वात् । एतेन - वाक्यजन्यप्रमितिरूपस्य संस्कारजन्यस्मृतिसन्ततिरूपस्य वा वेदनस्य किंकर्मापेक्षयेतिनिरस्तं, इच्छाया अप्यनुकूलता योगादीनोत्पत्ते किंकर्मापेक्षयेति समत्वात् । अन्तःकरणनैर्मल्यद्वारेणेतिचेत् तुल्यं, " यत्रोभयोः समो दोषः " इत्यभियुक्तवचनं किमर्थमिह विस्मरसि । " कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते " इत्यादिवाचनिकार्थातिलङ्घनं तत्राधिकम् । नापि द्वितीयः ; शमादेरविहितप्रतिषिद्धनिषिद्धविषयत्वेन नियोगतया

---

कार्याभाव इत्याह ( सम्भवतीति ) ( चित्रापशुफलत्वादावपीति ) चित्रायाः पशुफलत्वादौ । ( तस्मादिति ) तथाच श्रुतिबलात्साधनत्वे सिद्धे कारणान्तराभावात्कर्मादिवैगुण्याद्वा कार्याभावस्तदुन्नीयत इति भावः । ( अत्रापीति ) तथाच श्रुत्यक्षरपर्यालोचनैव कार्या नोक्तार्थविरोधइत्यर्थः । अन्यथा - श्रुत्यासमाश्वासाभावे । चार्वाकमतप्रवेशेन यत्रकुत्रचिद्यस्य कस्यापि कारणत्वमङ्गीकुर्वता कर्मणो वेदनसाधनत्वं न निराकर्तुं शक्यमित्यभिप्रायेणाह ( कुर्वन्नेवेति ) विस्मरणशीलस्य व्यभिचारनिमित्ताशङ्का मुक्तार्थस्मारणेन परिहरति ( व्यभिचारस्येति ) एतेन – वक्ष्यमाणेन ( किं कर्मापेक्षयेति ) अन्यथा घटमानयेति वाक्यार्थज्ञानाय घटादिस्मरणाय च यागाद्यनुष्ठानप्रसङ्गादितिभावः । ( इच्छायाइति ) यदीच्छामात्रे तदपेक्षाभावेऽपि प्रमाणबलादिह तदपेक्षा तदा प्रकृतेऽपि तुल्यमिति भावः । अविशेषे कथं विविदिषासाधनत्वमतिक्षेपइत्यत्राह ( कषायइति ) ( अविहितेति ) अविहितश्च तत्प्रतिषिद्ध

विहितेभ्य कर्मभ्यो व्यतिरिक्तविषयत्वात् । विहितस्यच "धर्मेणपापमपनुदति", "कषायपक्ति कर्माणि ज्ञानतुपरमागतिः" इत्यादिभिर्विद्योपकारकत्वस्यैव श्रुतत्वात् । नचतृतीय, फलाभिसंधिविरहादेवत्रिवर्गानारम्भात्, अनेकफलसाधनस्यापि ज्योतिष्टोमादे रभिसंधिविशेषेण फलप्रतिनियमस्य सर्वैरभ्युपगन्तव्यत्वात् । अतएवनच तुर्थ, तत्रापि विनियोगपृथक्त्वेन नित्यानित्यसंयोग विरोधाभावात् । तदेतत्सर्व सूत्रकारै रेव विस्पष्टमुक्तम् - "सर्वापेक्षाचयज्ञादिश्रुतेरश्ववत्" "शमदमाद्युपेतस्स्यात्तथापितुतद्विधे स्तदंगतया तेषामप्यवश्यानुष्टेयत्वात्" "विहितत्वाच्चाश्रमकर्मापि" "सहकारित्वेनच" "अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात्" इत्यादिभि । याचते श्रुत्यक्षरपर्यालोचना सोऽपिहस्तसमालोच, "सोऽन्वेष्टव्य", सविजिज्ञासितव्य." "तद्विजिज्ञासितव्यम्" "श्रोतव्योमन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतिशीलापरामर्शात्, नहि तेपुसन्प्रत्यार्थविधिपरत्व भवतीप स्वीकृतम् ।

---

श्चेत्यर्थ । शमादेरेतावन्मात्रविषयत्वे नियामकमाह (विहितस्यचेति) ननु फलाभिसन्धिविरहेपि तद्योग्यस्य कथं तदनारम्भकत्व, नहि दाहार्थ स्पृष्टएव वह्निर्दहतीतिनियमोस्तीत्याह (अनेकेति) श्रुत्येकसमधिगम्येर्थे तत्तत्कामाधिकारबलाद्यथाश्रुति तथांगीकारइतिभाव । (अतएवेति) फलाभिसन्धितदभावाभ्यामेवेत्यर्थः । तदेव विवृणोति (तत्रापीति) (हस्तसमालोचइति) हस्तस्येव समालोचनमित्यर्थ । एकहस्तवदेवहीतरहस्तोऽपि । अयश्च घञन्तत्वान्नियतपुल्लिंगः (सोऽन्वेष्टव्यइति) आदिशब्देन "तद्विजिज्ञासस्व" इत्यादेस्संग्रह । प्रकृत्यर्थस्यैव वाक्यार्थान्वयेपीच्छानुवाद श्रुतेश्शील, तथाचोपसर्जनेनापिप्रकृत्यर्थेन विध्यन्वयस्तत्कारणान्वयो युज्यतेहीतिभावः । (तेष्विति) "विजिज्ञासितव्यः" "विजिज्ञासितव्य" "निदिध्यासितव्य." इत्या

विधिबलावसितपुरुषार्थसाधनतार्थसिद्धेच्छानुवाद रूपतापत्ययस्य, ध्यायतीत्यादिविध्यन्तरैकार्थ्यात् । तत्र शाब्द प्रत्ययार्थप्राधान्य मनादृत्येच्छया इष्यमाणप्रधानत्वादार्थ प्रकृत्यर्थप्राधान्य स्वीक्रियतइति चेत्, तर्हि " क्रियावानेषब्रह्मविदां वरिष्ठ, 'कर्मणैवहि संसिद्धिं' कषायेक र्मभि पक्वे ततो ज्ञानं प्रवर्तते " इत्यादिप्रमाणसहस्रैकार्थ्या दस्यापि वेदनपरत्वमङ्गीकुरुष्व । लोकेऽत्र असिना जिघांसति अश्वेन जिगमिषति इत्यादिषु प्रकृत्यर्थे करणान्वयो बहुलमुपलभ्यते । सत्रासेरश्वस्यत्रा हननगमने प्रसाधनत्वायोगात् हननादिसाधनत्वस्यान्वयव्यतिरेकसिद्धत्वाच्च अगत्याप्रकृत्यर्थसाधनत्वाश्रयण, इहतु न तथा, अत करणनैर्मल्यद्वारेण सत्त्वविवृद्ध्योपकारकत्वस्य ज्ञानतदिच्छयोरविशेषादिति चेन्न, अनन्यपरत्वस्योपपादितत्वात्, अयोगस्य चात्राप्यविशेषात् । तथाहि योय विविदिषाकामो यज्ञादिष्वधिक रोति सकिं तदानीं वेदनमिच्छति उतन, आद्ये विविदिषासिद्धेरेवेति न तस्या यज्ञादिसाध्यत्व, तथाच चक्रकम्, वेदनेच्छाया जाताया मेव विविदिषेच्छा जायते, तस्यां जातायां कर्मानुष्ठानम्, ततो विविदिषेति । अत्रैकैकोभयपर्यवसको चेनात्माश्रयान्योन्याश्रयावप्यत्रभा

द्विष्वित्यर्थ । अत्र वाक्येष्विति विशेष्यमध्याहार्यम् । शङ्कते ( विधिबलेति ) अनुवादरूपत्वे हेतु ( ध्यायतीत्यादीति ) ( शाब्द प्रत्ययार्थप्राधान्यमनादृत्येति ) अत्र हेतुरनुवादरूपत्वम् । ( स्वीक्रियतइति ) प्रकृत्यर्थे नैव विध्यन्वयहेतुतयाङ्गियतइत्यर्थ । उपसर्जनेन प्रकृत्यर्थेन करणान्वयोपि लोके दृष्टइत्याह ( लोकेत्रेति ) शङ्कते ( अत्रासेरिति ) ( अनन्यपरत्वस्येति ) " क्रियावानेषब्रह्मविदा वरिष्ठ " इत्यादिवेदनसाधनत्वप्रतिपादक श्रुतिबलादिति भाव । ( अयोगस्येति ) इच्छान्वयायोगस्येत्यर्थ । ( तथेति ) तथाहि - यज्ञादिसाध्यत्वइत्यर्थ । ( वेदनेच्छायामिति ) विविदिषाया स्वत प्रयोजनत्वाभावेन

ध्यो । द्वितीयेपि वेदनस्यानिष्टत्वे विविदिषाप्यनिष्टैव स्यात्, तद्वि षयत्वात्तस्या, विविदिषापि वेदनं साधयेत्, तथापवर्गादिकामिनि मु मुक्षौ तस्यामभिलाषसंभवः । ननु वेदनौन्मुख्यलक्षणविविदिषा पूर्वं सहजा । तदर्थप्रवृत्तिपर्यन्तानु सा श्रवणतयाभिमतेतिचेन्न, तादृशता वेदनाप्ये तत्पत्त्यनुपपत्तिविकल्पे प्रागुक्तदोषानतिलंघनात् । नहि वेद ने तावदिच्छायामसंभवन्त्या तादृशीमपि तामिच्छेत्, तदुपायवर्गानुष्ठान मेव वा सहेत । ननु दृष्टमेतत् यदनुभुक्षापिपासादिकामनया भोजनमुपादित्सते, तत्रापि भोजनादेरिष्टत्वानिष्टत्वविकल्पेन प्रागुक्तप्र सङ्गोदुर्वार । तत्र य परिहारस्ते सनोत्रापि भविष्यतीतिचेत् तन्न, भोजनादेरसाधारणतोऽनुकूलत्वज्ञानादेवेष्टत्वसिद्धेः । तथापि दोषवशात्तदा तनमारोग्यामक प्रातिकूल्यमपनेतव्यमिति तावन्मात्रार्थं भेषजोप देश, न पुनरिष्टत्वस्वरूपनिष्पत्तये । अत्रापि तर्हि तथास्तु, सामा न्यतो वेदनस्येष्टत्वेऽपि तादात्विकतत्प्रातिकूल्यापादकरजस्तमोनिबर्ह णेन अन्तःकरणशुद्ध्यर्थं कर्मणा विनियोग इतिचेत्,

---

वेदनार्थमेवोद्देश्यत्वादिति भाव । ( तद्विषयत्वादिति ) तस्या वि विदिषाया । ननु वेदनेच्छाभावे कथं विविदिषेच्छाया असंभवइत्या शङ्काया तद्विषयेच्छायास्स्वयं प्रयोजनत्वाभावेन तत्साधनत्वेनैवोद्दे श्यत्वादित्याह ( विविदिषाहीति ) अपवर्ग - अविद्यानिवृत्ति. । आ दिशब्देनानवच्छिन्न ब्रह्मानन्दानुभव उच्यते । ( तदर्थेति ) वेदनार्थश्र वणाद्यनुष्ठानपर्यन्तेत्यर्थ । ( प्रागुक्तेति ) तीव्रविविदिषाहेतुभूत यज्ञा द्यधिकारिणि तीव्रवेदनेच्छाभावे वेदनौन्मुख्यमात्राद्वेदनसाधनश्रवणादा विव ततोपि व्यवहितायां श्रवणादिहेतुतीव्रविविदिषायामिच्छानस्या त, तीव्रविविदिषाधिकारेतु यज्ञादिसाध्यत्ववचनवैयर्थ्यं प्रसङ्गइत्यर्थ । ( तथापीति ) प्रातिकूल्यशङ्कायां प्रतिकूलपरं भोजनमतिकूलमित्यर्थ । प्रा तिकूल्यहेतुपरोधो भोजनस्य प्रातिकूल्यहेतुरित्यर्थ । (तत्प्रातिकूल्येति) वे दनेच्छायां सत्यामपि रजस्तमोभिभूतत्वात्तत्साधनश्रवणादौ दुःसाध्यगुरु शिश्रूषादिसाध्ये प्रातिकूल्यबुद्धिर्भवतीति रजस्तमोनिबर्हणार्थं कर्मेत्यर्थ ।

तर्हि विविदिषासाधनश्रुति परित्यर्क्तेव । अवान्तरव्यापार त्वा दविरोध इतिचेत, तर्हि वेदनसाधनत्व मप्यनुपपन्ना, तत्पूर्वभाविन स्सर्वस्यापि यज्ञादिकर्मणा तत्व्यापारत्वेपपत्ते । एवञ्चसति " क्रियावानेषब्रह्मविदांवरिष्ठ " " कषायेकर्म भि पक्वे ततोज्ञान प्रवर्तते " पुण्यप्रज्ञावर्धयति क्रियमाण पुन पुन " इत्यादिभिरैकार्थ्यंच । अतो यज्ञादिकर्म वेदनसाधनमेव । ननु विविदिषासाधनत्वेपिचोद्य यज्ञादे तद्भक्तिसाधनत्वेऽपि समान । तथा हि, किंभगवतिभक्तिमात्रकामयते उत तद्विशेष ? नप्रथ म, भक्तेर्नित्यत्वेन साध्यत्वायोगात । नद्वितीय, भगवद्भक्तिवि शेषस्य तद्भक्तानपि नैरपेक्ष्यात, भक्त्यवान्तरभेदान्निर्वाहेऽपि प्रागदे वदोषइति तत्र, प्रीतिरूपज्ञानविशेषोऽहि भक्ति, प्रीतिश्च तारतम्यवता विषयस्वभाव विशेषाभिमानाभ्यासभेषजादिभि प्रेमवृद्धि कामशास्त्रा दिष्वपिसम्मता, पुरुषस्यतकामना सम्भवति नवेत्येतावदेव चिन्तनीय ।

---

(तर्हीति) विविदिषाया पूर्वोक्तिद्वत्या रजस्तमोनिवर्हणार्थमेव कर्मानु ष्ठानमिति विविदिषार्थतया यागादिक श्रुतिप्रतिपाद्य नस्यादित्यर्थ । गुरुशिश्रूषादिदु रसाध्येविश्रवणादौ प्रातिकूल्यबुद्धिविरोधिनीच्छा रजस्तमो निवर्हणमन्तरेणनभवतीति यज्ञादिभिस्तादृशेच्छायाजननीयाया रजस्तमोनिवर्हणस्यावान्तरव्यापारात यज्ञादेर्विविदिषार्थतया श्रुतिप्र तिपाद्यत्वमविरुद्धमितिशङ्कते । (अवान्तरेति) यद्यप्येव सतिपूर्वोक्ता न्योन्याश्रय स्थिरएव । तथापि दूषणान्तरमाह (तर्हिवेदनेति) एव व्यापा रस्यान्तरधायकत्वेन विविदिषाकारणयागाङ्गीकारे रजस्तमोनिवर्हण प्रा तिकूल्यनिवृत्तिविविदिषा श्रवणादिरूपद्वारमङ्गीकृत्य वेदनसाधनत्वम ङ्गीकर्तु शक्यमेव, बाधकाभावात, एवञ्च श्रुत्यन्तरानुसाराद्वेदनसाध नपरत्वमेवास्यवाक्यस्याङ्गीक्रियतामितिभाव । (तद्भक्तावपीति) तस्मि न्निवेतिभाव । भक्तिविशेषस्यापि भक्तेर्मोक्षसाधनत्वज्ञानतत्तोभक्तीच्छा सम्भवत्येव तथापि प्रथमशङ्काम्भ्युपेत्याह (तन्नप्रीतिरूपेति) (भेषजा दिभिरिति) आदिशब्देनमणिमन्त्रादिग्रह । ( कामशास्त्रादिष्विति )

तत्र यदिसजातमात्रादतिशयितस्य प्रेम्ण फलान्तर प्रमाणतसिद्धेत् तदा तथाविध तस्यातिशयमभिवाञ्छेदेव । नच तावता तथाविधस्यातिशयस्यापि निष्फलत्वप्रसग, ज्ञानवदुपपत्ते, सामान्यतोऽवगतेहि विशेषतो ज्ञानायव्याप्रियते, अन्यथा जिज्ञासैव सर्वत्रनस्यात । नन्वेव विविदिषायामप्येवमविविवतिचेन्न, विशेषेच्छायाएव प्रागेवोदयात्, नहिपूर्व सामान्यतो ज्ञानमिच्छति पश्चाद्विशेषतइति सभवति । नच विषयविशेषावच्छेदमन्तरेण इच्छाजाति

---

आदिशब्देन "रोचनालक्ष्मणामूल कल्कलिप्ततनूर्वधू । ऋतौप्राप्नोतिसौभाग्य दयितप्रियतामपि" ॥ इत्याद्युक्तायुर्वेदसग्रह. । (सञ्जातमात्रादिति) प्रेम्णइतिविशेष्याध्याहार । (ज्ञानवदिति) विशेषतोज्ञानेच्छायास्तस्यामपि विशेषतोज्ञानाभावादिरर्थ । व्याप्रियत इत्यनन्तर न तुविशेषतोज्ञातइत्याध्यहार. । (अन्यथेति) विशेषतोज्ञातेचेदित्यर्थ । सिद्धइच्छाविरहादितिभाव. । (विविदिषायामप्येवमिति) यथाजिज्ञासा कारणतयापूर्वज्ञानसत्त्वेपि ज्ञानान्तरविषयिणीजिज्ञासा तथावेदनेच्छायाविविदिषेच्छाकारणतयापूर्वसत्त्वेपि विविदिषान्तरविषयिणीच्छास्त्वित्यर्थ. । कारणीभूताया अपिवेदनेच्छाया इष्यमाणतयाभिमतेच्छासजातीयत्वा द्विषमोदृष्टान्तइत्याह (न विशेषेच्छायाइति) विशेषविषयाया इच्छायाइत्यर्थ । ननु विशेषविषयेच्छाविजातीयपि स्वरूपतएव तद्विजातीया तद्विषयेच्छैवेष्यतामित्यत्राह (नच विषयेति) यद्यप्येकस्मिन्नेवविषये इच्छायामुत्कटत्वानुत्कटत्वरूप जातिविशेषो लोकसिद्धः, तथापि पूर्वोक्तरीत्या उत्कटेच्छाप्यत्रास्तीति तात्पर्यम् । यद्वा – जिज्ञासाविषयीभूतविशेषज्ञानस्य कारणीभूतसामान्यज्ञानादिवात्र इष्यमाणविविदिषाया विद्यमानविविदिषापेक्षया विषयविशेषावच्छेदात्र वैलक्षण्य भ्रम, किन्तु लोकसिद्धोत्कटत्वादिनैवेत्याशक्य तदपि प्रकृते नसभवतीत्याह (नच विषयेति) विषयविशेषावच्छेदातिरिक्तो यो जातिविशेष औत्कट्यादिरूपस्सप्रकृते न सभवतीत्यर्थ । तादृशोत्कटवेदनेच्छाया असिद्धौ उत्कटविविदिषाविषयकेच्छाया

विशेषः कश्चित्संभवति । भक्तौतु भोग्याकाराविर्भाव तारतम्यवशा त्तारतम्यमुक्तमिति । इहापि ततएव तारतम्यमितिचेत् ; अस्तुत त्तथापि काम्यत्वदुर्वच - तथाविध विषयविशेषितस्य वेदनस्य काम्य त्वमन्तरेण तदसिद्धेः, तत्काम्यतायाश्चसिद्धौसिद्धा तथाविधवेदनेच्छेति कथंसाकाम्या, अतस्सिद्धं

---

असंभवादित्यर्थः नतु इष्यमाणभक्तावपि कथ प्रकृते जातिविशेषसंभ व इत्याकांक्षायां प्रीतिश्च तारतम्यवतीत्यादिना पूर्वमुक्तं स्मारयति (भक्तौत्विति) भोग्यस्याकार भोग्याकारः प्रियत्वमितियावत्। आ विर्भावोनिष्पत्तिः। प्रियत्वतारतम्यस्य प्रीतितारतम्याधीनत्वात प्रीतिता रतम्येतात्पर्यम्। तथाच प्रीतिरूपभक्तितारतम्यमेव भक्तिविषये का मनायां हेतुरित्यर्थ । नतु यादृशीभक्तिस्त्वयेष्यमाणत्वेनाभिमता त- द्रूपवेदनवि षयत्वमेवेष्यमाणायां विविदिषायां विशेषोस्त्वित्याशङ्कते (इ- हापीति) विविदिषायामित्यर्थः (काम्यत्वमिति) विविदिषायाइति शेष । (तथाविधेति) अतिशयितप्रीतिरूपत्वात्मको य इष्यमाणविविदिषा- याः प्रकारतया विषयः तद्विशेषित यद्वेदनं तत्कामनामन्तरेण त- द्विषयविविदिषाकामनापि न संभवतीत्यर्थः। नन्विच्छार्थं कर्मानुष्ठा नस्यात्माश्रयप्रसक्तो क्वचिदपीच्छानसंभवेत् इच्छाहेतुभूतकर्मानुष्ठाना योगात, नचेच्छायाविषयवैलक्षण्यज्ञानमात्राधीनत्व, वैलक्षण्ये ज्ञाते पि कस्यचिदिच्छानुत्पत्तिदर्शनात्। अतः कस्यचिदिच्छोत्पत्तेः कर्म हेतुकत्वमाश्रयणीयम् - तच्चैव सत्यनुपपन्नमित्यतआह (अतस्सिद्ध- मिति) अस्मन्मते इच्छार्थं कर्मानुष्ठान नास्त्येव, भोगादृष्टोद्बोधि तपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्ते । नचाज्ञात सुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम्; बहु धंव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतहेतुरूपत्वासंभवात, "यज्ञेन विविदिषन्ती" तिवाक्यस्य ह्यर्थश्चिन्त्यते, अतो बुद्धिपूर्वकमेव एतद्वा

यज्ञादिकर्मविविदिषासाधनत्वेन न विहितमिति । तदेतत्सर्वं मभि सन्धायाह-- " एवं रूपापानुगानुसृते स्साधनानि यज्ञादीनि कर्माणीति " यज्ञादिश्रुतेरश्ववदि " " त्यभिधास्यते " इति ॥

इतिश्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु

शतदूषण्यां विविदिषासाधनत्व भङ्गवाद. षष्ठः ।

---

क्यविहितयज्ञाद्यनुष्ठानम् । तदिदमुक्तं ( यज्ञादिकर्मेति ) ( विविदिषा साधनत्वेन नविहितमितिच ) अत्र विविदिषन्तीत्यस्य सन्निधौ " मन सैवानुद्रष्टव्य " मिति विशदवेदनं विहितम्, " एतमेव विदित्वामुनिर्भ वति " इतिस्तुतम् । अतो विधिस्तुतिविषयस्यैव वेदनस्यात्रविध्यन्त राकांक्षा – नतु तदुभयरहिताया विविदिषाया. " इति तत्त्वटीको क्तमप्यनुसन्धेयम् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत

परावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरण

परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन

रामानुजदासेनविरचितायां शतदूषणी

व्याख्यायां चण्डमारुताख्यायां –

विविदिषासाधनत्वभंगष्षष्ठः

॥ स्कन्धः ॥

मनसःसर्वज्ञानकरणत्वात्कारणसहकारित्वं किं नजानासि । तथापि विनिगम-नायां को हेतुरिति चेत्, न, अन्धस्यांधतमसिस्थितस्यत्वा वाक्यश्रवणा दशमोस्मीति प्रत्यक्षप्रत्ययात् । नचात्रापरोक्षत्वमारोपितं, बाधकाभावात् । नच सम्प्लवे भेदाग्रहा त्तद्व्यवहारः, कदाचिदपि तत्र धीभेदानुपलंभात् । अतो वाक्यजातीयस्य कस्यचित्प्रत्यक्षज्ञानजनकत्वसिद्धौ क विरोधाव काशः । अन्यदपि वाक्यं किं नजनयतीतिचेत्, न, गोजातीयत्वे शाकरः किं न दुग्धे दुग्धमितिवदुपहास्यत्वात् । अस्ति तत्रावान्तरोपाधिरिति चेत्, अस्त्यत्रापिकश्चित् । नच तद्ज्ञानं तत्कार्योपाधिज्ञातिबन्धि, तज्ज्ञान स्य तत्कारणत्वानभ्युपगमात् । अन्यथा अतिप्रसंगात् । यथाहु "नकारण परिज्ञानं तत्कार्योत्पत्तिकारणं । नहि बीजापरिज्ञाने नांकुरो परिदार

---

मिति वादिन एवाशंकेति । ( मनसइति ) तथाच तस्यां न पूर्वोक्तगौरवमितिभावः । विनिगमनायांपि शब्दकरणकत्वनिर्द्धारणं कथमिति पृच्छति (तथापीति) (अन्धस्येति) तत्र चक्षुरादेरभावात्, मनसश्चापि करणत्वानङ्गीकारात् शब्दस्यैव तत्र करणत्व वाच्यमिति भावः । (प्रत्यक्षप्रत्ययादिति) प्रत्यक्षत्वमानुभाविकमितिभाव । यद्यपि नेदं रजतमितिवद्भ्रमप्रत्यक्षबाधः, तथापि यौक्तिकबाधोऽस्त्येव, मनस्संवलितसामग्र्या शब्दसंवलितसामग्र्याश्च विद्यमानतया परोक्षापरोक्षरूप-कार्यद्वयस्यावश्यकत्वात्, अतोदशमोस्मीत्येकैवापरोक्षप्रतीतिरितिबुद्धे र्भ्रमत्वमवर्जनीयमेवेतिशङ्कां परिहरति (नचसंप्लवइति) (भेदाग्रहादिति) भ्रमस्याप्युपलक्षणं । (कदाचिदिति ) तत्र-तादृशस्थले । करणान्तरसन्निधानस्थले धीभेदानुपलम्भेन मनसः करणान्तरसहकारित्वमेव, न पृथक्करणत्वमित्यर्थः । यद्यपि मनसः करणत्वं स्वमते कुत्रापि नास्त्येव, तथापि परेण स्वमतेन शंकिते तदभ्युपगमेन परिहृतमिति ध्येयं । ( क्वेति ) शब्दस्य प्रत्यक्षजनकत्वं नविरुद्धमित्यर्थः । ( अस्तीति ) खौचविशेषितं गोत्वमित्यर्थः । नन्वस्माभिरज्ञातत्वं यद्यपि न दोषः, तथा प्यपरैर्ज्ञातत्वे वस्तुसत्त्वेव नस्यादित्यत आह

णम्'' इति । नचाम्यात्यन्ताज्ञानता, स्वतोऽपरोक्षार्थगोचरत्वस्योपाधेरेव धारणात् । नच– तत्वमस्यादिवाक्यस्य प्रत्यक्षज्ञानजनकत्वे किं प्रमाण मितिवाच्यम् , निवर्त्यमिथ्यात्वान्यथानुपपत्त्यैव तत्सिद्धेः। स्वत शुद्धेपि हि विश्वसाक्षिणिब्रह्मणि स्फटिकमणिघटितदाडिमीकुसुमरागोपरागवन् अवभासमात्रसिद्धि रियमशुद्धिः, साच ज्ञानमात्रनिवर्त्येति ''तरतिशोकमात्मवि''दित्यादिश्रुतिशतसिद्ध, मिथ्याभूतस्य च धीमात्रनिवर्त्यत्वं,युक्तं, नच परोक्षज्ञानंनिवर्तकदृश्यते । अतः परिशेषादपरोक्षमेव ज्ञानं निवर्तक मितिस्थिते, नतावत्करणमिन्द्रियं, बाह्येन्द्रियाणां प्रत्यक्पराङ्मुखत्वात्, मनसोपि सोहमस्मीत्यरिगन्तर्थे स्वातन्त्र्येणाप्रवृत्ते, शब्दसंस्कारादिपुरस्कारेतु तस्यैव करणत्वोपपत्ते', मनसश्च नित्यशुद्धबुद्धमुक्तस्वभाव ब्रह्मगोचर साक्षात्कारकरणत्वस्या दृष्टचरत्वेन शब्दस्य तत्सहकारित्वकल्पनायोगात् , तथात्वेच श्रवणादिनैष्फल्यात् । ''न चक्षुषागृह्यते नापि वाचा'' ''मनसातुविशुद्धेन'' ''मनसैवेदमाप्तव्य'' मित्यादिश्रुतीनां

---

(नचास्येति) ( निवर्त्येति )तज्ज्ञाननिवर्त्यस्य मिथ्यात्वं तज्ज्ञानस्य साक्षात्त्वमन्तरेणानुपपन्नमिति प्रदर्शनार्थं निवर्त्यपदम्, प्रपञ्चरूपस्य निवर्त्यस्य मिथ्यात्वं तत्वमस्यादिवाक्य स्यापरोक्षजनकत्वमन्तरेणानुपपन्न मित्यर्थ । मिथ्यात्वं ज्ञाननिवर्त्यत्वञ्च प्रपञ्चस्योपपादयति ( स्वतइत्यादिना ) ज्ञानमात्रनिवर्त्यत्वे युक्तिमप्याह ( मिथ्याभूतस्येति ) मिथ्याभूतस्य ज्ञानमात्रनिवर्त्यत्वं युक्तञ्चेत्यन्वयः । (मनसोपीति) सहकारिविशेषमनाश्रित्य सोहमितिज्ञानस्य मनसाऽसंभवादित्यर्थ । तत्सहकृतमनस एव करणत्वं कुतो नस्यादित्यत्राह (मनसश्चेति) यद्यपि शब्दस्यापि तादृशसाक्षात्कारकरणत्वमसिद्धं, तथापि तादृशज्ञानकरणत्वे नविवादः, अतस्तज्जन्यज्ञानस्यसाक्षात्वमात्रंकल्पनीयं, मनसस्तु तादृशज्ञानकरणत्वं तज्जन्यज्ञानस्यसाक्षात्वंच कल्प्यम् , अतोलाघवाच्छब्दस्यैव साक्षात्कारकरणत्वकल्पनं युक्तमितिभावः । ( तथात्वइति ) मनसस्तादृशसाक्षात्कारकरणत्वस्य दृष्टचरत्वे श्रवणादिसापेक्षापरोक्षज्ञाने प्यन्यत्र

चित्तैकाग्र्यस्यानुगतबोधनेतात्पर्यात् । अतएव " अप्राप्यमनसासह " इत्यादेरनधिगतमनोविषयत्वव्यवस्थापनानुपपत्ति । नच-मानसप्रत्यक्षमस्ति, आत्मन स्वप्रकाशत्वात्, सुखादेस्तु साक्षिवेद्यत्वात्, भावनासहकृतमनोजन्यसाक्षात्कारस्यापि पथिकपरिभावितप्रियतमासाक्षात्कारवत् भ्रान्तित्वात्, भ्रान्तिरूपसाक्षात्कारस्यापि साक्षिरूपत्वेनैव मानसत्वाभावात्, अनुमानादेस्त्वापरोक्ष्यानुदयशीलत्वात् । अतो वाक्यपरिशेषे तत्रापि भेदगर्भाणां वाक्यानां भेदभ्रमनिवर्तकत्वायोगात् अद्वैतवाक्यान्येवाविद्यानिवर्तकापरोक्षज्ञानजनयन्तीति। किंच-प्रत्यक्षस्य भेदभ्रमस्य परोक्षादैन्द्रियिकप्रत्यक्षाद्वा न परिभवोयुक्त, न्यूनत्वात् समत्वाच । शाब्दम् तु प्रत्यक्ष साक्षात्कारत्वाविशेषेपि निर्दोषहेतुकत्वाद्बाधक्षम । तथोक्त "न्यूनत्वाच्च समत्वाच्च परोक्ष नाक्षजक्षमं । निर्दोषहेतुजन्यत्वात् प्रत्यक्ष शाब्दन क्षम" मिति। प्रत्यक्षभेदभ्रमनिवर्तनइतिशेष । साक्षात्कारस्यचाविद्यानिवर्तकत्व तस्यच शब्दकरणत्व शब्दादेवसिध्यति, " निचाय्यत मृत्युमुखात् प्रमुच्यते " ' क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टेपरावरे" इत्या

---

वलमस्य मनसएव करणत्वेन शब्दस्य करणत्वाभावाच्छ्रवणादिनिरपेक्षपरोक्षज्ञाने शब्दस्य करणत्व प्राप्त, तथाच श्रवणादिवैयर्थ्यमितिभाव । ( अतएवेति ) मनोग्राह्यत्वाभावे श्रुति प्रमाणमित्यथादुक्त भवति । ( भावनेति ) भावनासहकृतमनोजन्यत्वेन पराभिमतस्येत्यर्थ ( पथिकेति ) प्रोषितचिंतितायाः प्रियतमायाः साक्षात्कारवदित्यर्थ । पूर्व परोक्षज्ञानस्य निवर्तकत्वादर्शनादपरोक्षपरिशेष प्रमाणान्तराणामप्रवृत्तेर्वाक्यपरिशेषश्चोक्त, इदानीं परोक्षस्यापरोक्षस्य च निवर्तकत्वासंभवादपरोक्षत्व शब्दजन्यत्वच परिशेषयति ( किंचेति ) ( न्यूनत्वाच्चेति ) परोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्वदर्शनात्तदन्यूनविषयत्वादित्यर्थ । न्यूनत्वात्परोक्षमक्षमम्, समत्वादक्षजञ्च नक्षममित्यर्थ । नचैवं परिशेषात् साक्षात्त्वशब्दकरणत्वयो स्सिद्धि, किंतु श्रुत्यापीत्याह ( साक्षात्कारस्यचेति ) ( निचाय्येति ) चायृधातुर्दर्श

दिभि रपरोक्षज्ञानस्य भनियानिवर्तकत्वसिद्धेः। " तस्मै मृदितकपायाय तमसः पारं दर्शयति भगवान् सनत्कुमार." "वेदान्तविज्ञानसुनिश्चितार्था." "स्वाध्यायश्चक्षुरुत्तरकमस्य योगोद्वितीय मभिवीक्षणाय। अध्ययनमननन यनोत्यग्रणा नमामचक्षुरभिवीक्षनेतं" "पितृदेवमनुष्याणां वेदश्चक्षुस्सना तन" मित्यादे स्तस्य शब्दकारणत्वसिद्धिः। प्रयोगश्च—विगीतंज्ञान साक्षा त्कारि - तत्वमस्यादिवाक्यजन्यज्ञानत्वात्, तत्वस्वरूपगोचरश्रावणज्ञानवत्। नच तत् तदजन्यं - प्रत्यक्षेत्रियस्य कारणत्वस्वीकारात्। तत्रैवप्रतिज्ञा- या मपरोक्षज्ञानविपयत्वात्सुखादिज्ञानवदितिवाप्रयोगः। तत्वमस्यादिवाक्यवा स्वप्रतिपाद्यगोचरसाक्षात्कारजनकम् — स्वप्रकाशार्थोपदेशरूपत्वात्, स्वतोपरोक्षार्थविषयत्वाद्वा, संनिस्वप्रकाशा दशमस्त्वमसीत्यादिवाक्य वत्। अपरोक्षत्व तत्वमस्यादिवाक्यजन्यज्ञानवृत्ति - अपरोक्षज्ञाननिं ष्ठात्यन्ताभावा प्रतियोगित्वात्, ज्ञानत्ववदिति। नच अत्र परोक्षत्व तत्व मस्यादिवाक्यजन्यज्ञानवृत्ति - परोक्षनिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववदिति सत्प्रतिपक्षसाधनता, सिद्धसाधनात्। तेषा मेवहि वाक्याना मसंभावनाविपरीतभावनाप्रतिबद्धचेतसिपुरुषे परोक्षज्ञान

---

नार्थ.। (तस्माइति) करिष्यमाणोपदेशएव तत्र दर्शयतिना उक्तइति भाव.। (वेदान्तेति) सुपसर्ग प्रत्यक्षरूपइति भावः। (नमांसेति) मांसचक्षुर्निषेधाच्छ्रुतिचक्षुरनुमितमिति भावः। (विगीतमिति) नन्वयमसिद्धोहेतुः, वाक्यार्थज्ञाने वाक्यस्यातीतादिरूपत्वेनाजनकत्वा त, तज्ज्ञानस्यैव जनकत्वात, प्रयोज्यत्वमात्रविवक्षायां तल्लिङ्गिकायां तत्पक्षिकायांच व्यभिचार इतिचेन्न, अनुमित्याद्यन्यत्वेन विशेषणात्। यद्वा - तत्वमसिवाक्यमत्युच्चारणभिन्नमेव, तथाच - यस्य तत्वमसि वाक्यस्य नलिङ्गत्वं नापि पक्षत्वं नापिस्मृति, तच्छ्रवणजन्यं वाक्यार्थ ज्ञान पक्षः, तद्वाक्यप्रयोज्यज्ञानत्वं हेतुरिति। तत्वमस्यादिवाक्यजन्य- त्रिभिन्नज्ञानवृत्तित्वसाधनेदोषमाह, (सिद्धसाधनादिति) तत्वमस्या

जनकत्वमिष्यते । पूर्वोक्तश्रुतिविरुद्धतया कालात्ययापदेशाच्च । नचमाण्यं-अग्निहोत्रादि वाक्यजन्य ज्ञानेष्वप्येव प्रयोक्तुं शक्य मित्याभाससमान योगक्षेमतेति, तत्र विपक्षेबाधविरहात् । नहि तत्र प्रामाण्यस्यानुपपत्ति, अनुमानादिवदुपपत्ते. । नाप्यनुष्ठानस्य, परोक्षनिश्चयादपितदु-पपत्ते. । नापि फलस्य । तत एव तत्सिद्धे. । नापिच फलकामना या, फलसम्बन्धनिश्चयादेव तस्याअप्युपपत्तेः । अतएव पुरुषप्रवृत्तिरपि मगन्तव्ये । इहतु प्रागुक्तार्थानुपपत्तिरेव विपक्षेबाधिकास्यात् । अतोनाभासतुल्यतेति ॥ एव पूर्वेष्वपि प्रयोगे ष्वाभासतुल्यतोद्धारो द्र-ष्टव्य. । अतोविपक्षेबाधकस्यैव प्रतिबन्धरहस्यत्वात उक्तार्थे महाविद्याजात-मश्च यथायोगं प्रयोक्तव्याः । स्वपरपक्षसाधारण्यहि महाविद्याना स्वभा-व, तत्रानुकूलतर्कसदसद्भावाभ्या एकत्रार्थसिद्धि रितरत्रार्थासिद्धिरितिनि र्णय. । ननु तर्कपराहतास्मेहेतव, शब्दस्यप्रत्याक्षत्वप्रसगादिनिचेत्; न,अप्रसगात्। योगिमनसोबाह्यविषयप्रत्यक्षज्ञानजनकत्वेपि बाह्यप्रत्यक्षत्वहि मानसवदुपपत्ते । अथ चक्षुरादिपञ्चकान्यतमत्व , योगिमनोन्यत्वेसति बाह्य

---

द्विषयजन्ययथार्थज्ञानवृत्तित्वसाधने दोषमाह (पूर्वोक्तेति) (नचेति) अपरोक्षत्वमग्निहोत्राद्विाक्यजन्यज्ञानवृत्त्यपिप्रयोक्तुशक्यमित्यर्थ ।(फ-लकामनायाइति) अनेनेदंफलमेनूपादितिकामनायाइत्यर्थ ।(फलेति) फलसंबंधः - फलजननयोग्यता । (अतएवेति) पूर्वमनुष्ठानमित्यग्निहोत्रादिक्रियाविवक्षिता, प्रवृत्तिस्तु तज्जनककृतिरितिभेद । (इह त्विति) निवर्तमिव्याप्त्यान्यथानुपपत्तिरित्यर्थः । प्रतिबन्धोव्याप्तिः । ननु महाविद्यानां स्वपरपक्षसाधारण्यात् सर्वैव सत्प्रतिपक्षितत्वात् कथं ततस्साध्यसिद्धिरित्यत्राह (स्वपरेति) यद्यपि स्वपरपक्षसाधार-ण्य महाविद्यानां स्वभाव, तथाप्यनुकूलतर्कतदभावाभ्यां साध्यसि-द्धितदभावावित्यर्थं । (योगीति) बाह्यविषयत्व बाह्यविशेषण

विषया परोक्ष प्रमितिकारणत्वं वा बाह्य प्रत्यक्षांतर्भावे प्रयोजकमिष्यते, इष्टापितर्हि स्वतोपरोक्षार्थब्रह्मात्मविषयशब्दान्यत्वेस त्यपरोक्षप्रमितिकारणत्वं प्रत्यक्षांतर्भावप्रयोजकमितिसम स्समाधिः । किञ्च प्रत्यक्षांतर्भावइति इन्द्रियांतर्भावोवा, साक्षात्कारजनकवाक्यांतर्भावोवा विवक्षितःस्यात् । पूर्वत्र मनसोपि बाह्यानंतर्भावइतिवदुपलंभविरोधात् अशक्यः । उत्तरत्राविद्यप्रसंगता, ऐकराश्येसिद्धेस त्यवातरभेदाश्रयणाविरोधात्। तदेवत्तु कथमितिचेत् ,न,दशमस्त्वमसीत्यादौ तद्दर्शनस्यसमर्पितत्वात्। वाक्यस्यैवापरोक्षधीजनकत्वे मनननिदिध्यासनाविध्यानर्थक्यं, श्रुतवेदांतानां संसारानुवृत्तिदर्शनविरोधश्चेतिचेत्,न,प्रागुक्तप्रतिबन्धनिरसनद्वारेण तयो.श्रवणं प्रतिफलोदयकार्यंगतयाविधानोपपत्तेः, संसारित्वोपलब्धेश्च प्रतिबन्धकत्वपुरुषविषयत्वात् । अतो बाधकापेत सानुग्राहक श्रुत्यादिसिद्धं तत्वमस्यादेः साक्षात्कारजनकत्वमिति ॥

अत्रब्रूमः —— यत्तावदुक्तं केनुचिद्वाक्ये स्वपरोक्षधीहेतुत्व दृश्यतइति, तन्नराविषाणांकुरप्रसाधने खरविषाणांकुरनिदर्शन मिति मन्यामहे । तथाहि - संवित्स्वप्रकाशेत्यत्रनान स्सामान्यतः स्वपरसमवेत त्रैकालिकसर्वसंवित्स्वप्रकाशत्वंवास्यार्थः। तादात्विकीतु तज्जन्या संवि देका तदानीं स्वप्रकाशा, तत्र न सर्वसंविदां स्वप्रकाशत्वमिदानीमपरोक्षं, यतो

---

स्वं, ज्ञानाभत्यासत्तिकत्वेसतीतिया विशेषणीयम् । ननु कथमित्वं, ' निर्विशेषं न सामान्य ' मिति न्यायेन चक्षुरादिविशेषानन्तर्भावे प्रत्यक्षजनकसामान्यान्तर्भावस्यापिबाधा दित्याशंक्य सामान्यतः प्रत्यक्षान्तर्भावेसति चक्षुराद्यवान्तरभेदाश्रयणव च्छब्दरूपावान्तरभेदाश्रयणमपि संभवतीत्याशयेनाह ( ऐकराश्यइति ) ( तदेवत्विति ) ऐकराश्यमित्यर्थः । तद्दर्शनस्य - साक्षात्कारजनकत्व दर्शनस्येत्यर्थः । ( यत्तावदिति ) नवमरूढत्व लाभार्थं मंकुरशब्दप्रयोगः । ( यतइति ) अपरोक्षार्थविषयत्वमप्युक्तत्वाभ्युपगमात् ज्ञानापरोक्ष्यस्येतिभावः । नच सर्व संविदां कदाचि दापरोक्ष्या त्तद्विषयापरोक्ष्यंस्यादितिवाच्यं,

वाक्यस्य तदापरोक्ष्यहतुता स्यात् । नच सर्वसंविदैक्य, तस्यद्-
पयिष्यमाणत्वात् । तदैक्येपि तत्तदुपहिताकारेण परोक्षापरोक्षविभाग
स्य दुरपह्नवत्वात् । वाक्यजन्यसंविद्रूपापरोक्ष्येतार द्वाक्यमेव
कारण विषयप्रकाशाशकारणव्यतिरेकेण स्वप्रकाशांशे कारणान्त
रानुपलम्भादिति चेत , तर्हि सिद्ध मनुमानादे र्वाक्यान्तराणामप्यपरोक्ष
धीजनकत्व, तत्तज्जन्यधियामपि स्वप्रकाशांशेपि तत्तत्कारणकत्वात् । सत्य,
तथापि– सन्ति स्वप्रकाशेत्यादिवाक्येषु विषयप्रकाशांश स्वप्रकाशांश
श्चैकरूपेनेति विशेषइतिचेन्न, सामान्यविशेषविषयतया तद्भेदस्यदर्शितत्वात् ।

---

च्यम् । वह्न्यनुमितेर प्यापरोक्ष्यापातात । ( नचेति ) वस्तुतो ज्ञान
स्य स्वप्रकाशत्वेपि तत्स्वप्रकाशत्वस्य तेन ज्ञानेनाग्राह्यत्वा न्न तदापरोक्ष्य
मितिभाव । ( तदैक्येपीति ) उपहितसंविदां कासाञ्चि दन्यकाली
नत्वात् कासाञ्चिद्व्यधिकरणत्वाच्च पारोक्ष्यमितिभाव । ननु – सन्ति
स्वप्रकाशेतिवाक्यजन्यज्ञानस्य स्वप्रकाशत्वेनापरोक्षत्वा तज्जनकत्वेना
परोक्षहेतुत्व सिद्धमेव, नच – प्रत्यक्षांशे जनकत्वमेव साध्यम् अन्य
था सिद्धसाधनात् , वाक्यंच विषयांशएव हेतु –र्नस्वजन्यज्ञानांशेपि,अत
प्रत्यक्षजनकत्व नास्त्येवेतिवाच्य, तदंशेपि वाक्यातिरिक्तकारणादर्शनेन
तस्यैव कारणत्वा दिति शङ्कते ( वाक्येति ) ( तर्हीति ) तथाच
सिद्धसाधन हेतुविशेषण वैयर्थ्य चेति भाव । ननु विषयप्रका
शांशाभिन्नप्रत्यक्षांशजनकत्व साध्य, अनुमानादिषु वह्निमानितिजानामी
त्यत्र वह्निमानित्यंशोविषयांश जानामीत्यंश स्वप्रकाशांश सवित्स्व
प्रकाशेत्यत्रतु तज्जन्यज्ञानस्यापि संवित्त्वेन विषयान्तर्भावात् तत्प्रका
शेनैव स्वस्यप्रकाशोपपत्तौ जानामीत्यज्ञातस्यकल्पनाभावात् स्वप्रत्यक्षरूप
स्वांशप्रकाशांशो विषयप्रकाशांश श्चाभिन्नएवे त्यदोष इति शङ्कते
( सत्यमिति ) ( नेति ) संविदि त्यतीतानागतमपरसाधारण संविन्मा
त्रगोचरविषयप्रकाशांशमात्रेण जानामीति तज्ज्ञान मस्तिमात्रगोचर त

अप्रतिबद्धपरोक्षज्ञानमात्रविरोधी कथं तदनुवृत्तिः। तथाविधाच सामग्री प्रागेव दर्शिता। अतोनिवृत्तिश्च भ्रमस्यापि श्रवणदशायां। अपरोक्षाभिमानस्य निवृत्ता।

किञ्च स्वानिष्टं प्रसञ्जकं परानिष्टं प्रसञ्जनीयमिति तु तर्कस्य स्वरूपम्। उक्तञ्च श्रीसुन्दरपाण्ड्याचार्यैः। * "प्रसञ्जकन्तु स्वानिष्टं परानिष्टं प्रसञ्जयेत्। विपर्यये पराभीष्टं स्वाभीष्टे पर्यवस्यति॥ प्रसञ्जनं तु स्वाभीष्टं स्वानिष्टे पर्यवस्यति। स्वाभीष्टस्यासिद्धिः स्यात् परोक्षप्रसञ्जने" इति। उभयमप्यत्र विपरीतं, स्वतः प्रत्यक्षोऽपि सत्यपि श्रवणदशायां सत्यत्वात् परोक्षज्ञानाननुभवप्रसङ्गाभावात्। मिथ्यैव तदिति चेत्, पश्चात्तनप्रत्यक्षज्ञानजननमपि तथैवेति को विशेषः।

---

परोक्षज्ञाने नप्रतिबन्धकम्, नापि तदभावः परोक्षज्ञानहेतुः, मानाभावादितिभावः। (तथाविधेति) परोक्षविषयप्रमाणवदपरोक्षविषयप्रमाणमपि तत्त्वमस्यादिवाक्यादिति शब्दरूपसामग्रीदर्शितेत्यर्थः। (अत एवेति) अपरोक्षे विषयेऽपि परोक्षप्रत्ययस्योत्पादनात् भ्रमत्वस्वभावात् प्रतिबिम्बत्वमस्त्वित्यर्थः। (विपर्ययइति) विपर्यये पर्यवसानेतु पराभीष्टस्याभीष्टम् साधयति, यथा-धूमवतेच धूमस्तस्मात् वह्निमानिति। स्वानिष्टप्रसञ्जकत्वे हेतुमाह (प्रसञ्जकत्विति) प्रसञ्जक विपर्ययपर्यवसानात् प्रसञ्जकस्य इष्टत्वे तदभावस्यानिष्टत्वादनिष्टपर्यवसानमित्यर्थः। परानिष्टप्रसञ्जनीयमित्यत्र हेतुमाह(स्वाभीष्टस्येति)आपाद्यविपर्ययस्य स्वेष्टत्वाभावात्त्वापाद्यस्य चेष्टत्वे तदभावासिद्धेर्नस्वेष्टसिद्धिरित्यर्थः।(उभयमिति) प्रसञ्जकं स्वेष्टम्, प्रसञ्जनीयमपरेष्टमित्यर्थः। प्रसञ्जकस्य स्वेष्टत्वमुपपादयति (स्वतइति) (मिथ्येतदिति) परोक्षज्ञानस्य मिथ्यात्वेन तदभावस्य परमार्थत्वेनेष्टत्वात्, परमार्थेनेष्यमाणाभावप्रतियोगित्वेन अनिष्टत्वमुपपद्यत इतिभावः। (पश्चात्तनेति) श्रवणाद्यनन्तरभाविप्रत्यक्षस्यापि मिथ्यात्वात् तदप्यनिष्टमिति अनेन तर्केण 'निष्टमेव सिध्यतीत्यर्थः। किञ्च अभावस्य सत्यत्वादेव हि प्रतियोगिनः परोक्षज्ञानस्यानिष्टत्वं, अभावस्य

शुक्तौ रजतत्वस्यैवा विरोधापादकञ्च मिथ्यात्व मिट स्मर्तुमर्हसि ॥*॥ सत्य विरोधाच्छुक्तिश्च बाधकत्वेनकथ्यते । मिथ्याभूतंचरजत बाध्यत्वेना भिधीयते॥*॥तेन मिथ्यैतदितिरचन तत्राविरोधापादक न भवति, प्र सञ्जनीयञ्च कचिदस्मदिष्ट, आप्तोपदेशादिभि शुक्तित्वप्रकाशेऽपि दु- ष्टेन्द्रियादिना कस्यचित् कचिद्रजतावभासानुवृत्ते, अन्यथा भरता बाधि त नुवृत्तेर्दृष्टान्तस्याप्यभावप्रसगात् । तथा प्रत्यक्षसिद्धेऽपि शुक्तेस्त ने भ्रान्तविप्रलम्भकवाक्यादिभिरपि रजतधीरुदेत्येव, साच परोक्षेव, शी- घ्रन्तु बाध्यमानतया केषाचि त्तत्र तदनु त्पत्तिभ्रम । किंच - यदिप्र त्यक्षेविषये परोक्षप्रकाशो व्याहत । तदा पर्वतोऽयवह्निमानित्यादिपुविरो

---

सत्यत्वच मिथ्यात्वस्य शुक्तिरजतयो रिवाविरोधापादकत्वाद्वाच्यम्, तच्च न सभवति, सत्यमिथ्यार्थयोर्विरुद्धत्वात्, अन्यथा बाध्यबाधकभा वानुपपत्ते., तस्मात् परोक्षतदभावयोरविरोधासिद्धेः परोक्षा भावासभ या त्र प्रसञ्जकस्यानिष्टत्वमित्याह ( शुक्तावित्यादिना तवाविरोधापा दकत्वभवतीत्यन्तेन ) स्मर्तुमर्हसी त्यनन्तरन्त न्नसभवतीतिशेष. । ( सत्यमिति ) सत्य शुक्तित्वमित्यन्वयः । बाध्यत्वेनाभिधीयत इत्यत्र विरोधादित्यनुषञ्जनीयम् । ( अविरोधापादक नसभवतीति ) परोक्षतद्भा वयोरिति शेष । परोक्षज्ञानस्यापरोक्षभ्रमानिवर्तकत्वेपि शाब्दज्ञानस चिवेन्द्रियेणापरोक्षज्ञानादेव भ्रमनिवृत्तिस्स्यादित्यत्राह ( दुष्टेन्द्रियेति ) दोषमाहात्म्या दाप्तोपदेशे सत्यपि कचि न्न तत्वापरोक्ष्यमुत्पद्यते, किन्तु भ्रमएवेत्यर्थ । एव विरुद्धयोस्सन्निपाते शुक्तित्वज्ञाने सत्यपि र जतभ्रमस्स्यादि त्यापादनार्थमभिनेत्य तत्र दोष उक्तः, इदानीन्तु अप रोक्षेपि परोक्षप्रकाशोस्तिचेत् शुक्तित्वेनापरोक्षेपि रजतत्वेन परो क्षस्यादित्यापादनार्थमभिप्रेत्य तत्र दोषमाह ( तथेति ) अयोग्यताज्ञान प्रतिबन्धकन्नेतिभाव. । यद्वा – अप्रामाण्यशङ्कादशाविवक्षिता । ( उदे त्येवेति ) तत्रानुभवएव मानमिति भाव. । ( विशेषतइति ) प्रत्य क्षयोग्यार्थं विशेषतोदृष्ट, तदयोग्यार्थं सामान्यतोदृष्टमिति विभागा

परोक्षानुमानेषु तथाविधार्थगोचरत्वात्स्येषु च परोक्षप्रकाशो न स्यात् । योग्यतामात्रं तु तत्र, न तु तदानीं प्रत्यक्षमितिचेन्न । यस्य कस्यचित् आरण्यकयोगीश्वरादेस्तद्दर्शनात् । तथापि नानुमानं तथेतिचेत्; तर्हि तत्रापि दशमत्वादे र्वाक्यश्रवणात्पूर्वं मदर्शनात्तत्रास्यत स्साक्षात्कारसंभवः । यत्पुनः स्वस्थैर द्रष्टुंयोग्यतयाऽनंतरदर्शनाद्वा तत्र तत्संभव इष्येत, तर्हि सिद्धमनुमानादावपि तदुभयसंभवात् तथात्वं । यदा च अयंघटइति मन्यमानप्रयोगः कश्चिदयंघटइति ब्रूयात्, तदा तस्यापि प्रत्यक्षार्थविषयत्वाविशेषात् साक्षात्कारजनकत्वप्रसंगः । इष्यतएवेदमपीति चेन्न, इतरेषां परोक्षार्थविषयत्वादिति हेतुविशेषण प्रयोजनस्य तदनिष्टं, इष्यमाणत्वात्, तथापि ज्योतिष्टोमादिवाक्यार्थस्यापि योगिप्रभृतीनां प्रत्यक्षत्वयोग्यत्वाविशेषात् तान्प्रति केनचिदविदितमाहात्म्येन तत्प्रयोगे ततः साक्षात्कारसंभवस्स्यात् । तथा च दशममपि वाक्यं कस्यचित्साक्षात्कारकारणमिति स्थितौ केषांचिदेवेति व्यवस्थाभंगः । अस्त्वेवमपि

---

भिप्रायेणोक्तम् । (तथाविधेति) अप्रत्यादिवत्प्रत्यक्षार्थगोचरेष्वित्यर्थः । तदानीं प्रत्यक्ष परोक्ष प्रकाशो व्याहतः, अप्रत्यादिर्न तथा, ब्रह्म तु तथैव, नित्यापरोक्षत्वादिति शंकते (योग्यतेति) आप्रत्यादि तदानीमारण्यकानां योगिनामीश्वरस्य हिरण्यगर्भादेश्च प्रत्यक्षइत्याह (यस्यकस्यचिदिति) तन्नरस्य परोक्षे तस्य परोक्षं व्याहतमिति शंकते (तथापीति) (तर्हीति) तत्र परोक्षज्ञानस्य व्याघाताभावाच्च साक्षात्कारसमर्थनमित्यर्थः (यत्पुनरिति) यदि प्रत्यक्षे परोक्षव्याघात इत्येवोच्यते, प्रत्यक्षइति च प्रत्यक्षयोग्यत्वं, व्याहतत्वेनाभिमतं परोक्षज्ञानानन्तरमपरोक्ष इतिवा विवक्षितं, तथा च दशमत्वस्य प्रत्यक्षयोग्यत्वा दनन्तरं प्रत्यक्षदर्शनाद्वा परोक्षव्याघातात् अपरोक्षसंभव इष्यतइत्यर्थः ।

ननु – तदा प्रत्यक्षे परोक्षप्रकाशस्यैव व्याघातः, यदा च दशमत्वं प्रत्यक्षं तदा तत्रापरोक्षज्ञानसमर्थन मिति सफल दृष्टान्त इत्यत्राह (यदाचेति)

किन दिठनभिति चे त्, न, अनुमानादिष्वपि तत्प्रसगस्योक्तत्वात् । तामात्र तत्तमस्यादित्यय पांक्षिपासिद्धि । ततश्चापशून्यविरोधादि प्रसग । किंच - नित्यापि ज्ञानयाऽज्ञाततया सा साक्षिवेद्यत्वस्य भवदभिमतत्वा त्स्वे प्रमाण साक्षात्कारसमन सुलभमेव। यदिच स्वतो परोक्षार्थ नियमेन नास्य तज्जनकमितिव्यवस्थाप्येत । तदा दशमस्त्व गसीत्या दिदृष्टान्तासिद्धि । यद्यपि त्वमशस्यस्वतोपरोक्षता, तथापि स त्यादिविशिष्टाकारेण स्वतोपरोक्षत्वाभावात् , अन्यथा वाक्यश्रव णात्पूर्वमेव तद्विशिष्टप्रकाशप्रसगात् । अतोनुमानस्येव वाक्यजाती यस्य क्वचिदपि साक्षात्कारहेतुत्व दर्शनस्या सिद्धे स्तुग्राहकत्वाभा वात्र स्वाभिमतस्य कस्यचिद्वाक्यस्य तद्धेतुत्वकल्पन विरुद्धमेव । अतएव स्वतोप रोक्षार्थगोचरत्वलक्षणोपाधिरपिनिरस्त ।

यत्तु निवर्त्यमिथ्यात्वानुपपत्त्या पारम्पर्येण परोक्ष तज्जनक विशेषो परिशेषइति । तदप्यसिद्धन्यथासिद्धिभ्यामाक्रम्यते । सत्यमेवहि ससार भगवन्न प्रशिनेश्वरसकल्पविशेष निवर्त्य

---

( ततश्चेति ) अवेचणिकत्वेपि अनुमानाधिकार स्यानपायात , आनुमा निकापरोक्षज्ञानवत्त्वा त्तेषामपि ब्रह्मविद्याधिकारस्स्यादिति भाव । आदिशब्देन श्रवणादिवैयर्थ्यम् विवक्षित । ( किचेति ) नच साक्षि णस्तदीयवाभावा त्तत्प्रत्यपरोक्षत्व नेतवाच्यम्, शास्त्रार्थ न जानामी या दिरूपेणाज्ञानावच्छेदकार्थ व्यवहारजनकस्य साक्षिणोपि तदीयत्वादिति भाव । नच - कृत्याऽपरोक्षत्व विवक्षितम् । प्रकृत स्वतोपरोक्षत्वेनाः तथा त्वादिति भाव. । ( दृष्टान्तासिद्धिरिति ) ननु स्वतोपरोक्षार्थमात्रविषयत्व न हेतु , तादृशार्थविषय वात्र त्वा मस्यरूपाशापासवेवेति चेत्, किमप हेतु स्वतोपरोक्षार्थाशे परोक्षज ... , उततदर्थमात्रे, न द्वि तीय त्व घटज्ञातिश्च इयत्र घटाशे परोक्षतावत्ते , नाद्य दशमस्त्वमसी त्यादि वाक्यादाहरणायोगात् । (अतएवेति) वाक्यस्यापरोक्षज्ञानजनकत्वा सिद्धे स्वपरोक्षार्थगोचरत्व वारणतावच्छेदक मित्यपि निरस्तमित्यर्थः । ( सत्यमेवहीति ) ससारस्य सत्यत्व भगवत्सकल्पनिवर्त्यत्वञ्च सा

साधयिष्याम । यत्तु - "तरतिशोक मात्मवि"दित्यादिभि र्ज्ञानमात्रनि वर्त्यत्व सिद्धमिति, एतदपि वेदनज्ञानादिशब्दाना उपासनाख्यविशेषपर्य वसानस्य प्रागेवदर्शितत्वान्निरस्त । यदाहु ॥*॥ वेदन ध्यानविश्रान्तध्या न श्रान्त ध्रुवस्मृतौ । साचदृष्टिन्नमभ्येतिदृष्टिर्भक्तिश्च मुच्यतीति ॥ मिथ्याभू तस्य ज्ञानमात्रनिवर्त्यत्व युक्तमित्येतच्च मिथ्याभूततया भवदभिमत स्य तिमिरादिदोषस्य प्रतिभटादेश्च भेषजशस्त्रादिनिवर्त्यत्वोदाहरणेन प्रागेव दत्तोत्तर । अस्तुच मिथ्यात्वे धीबाध्यत्वे युक्ति, नचात्रमि थ्यात्व ॥ * ॥ दृश्यत्वाद्यदि मिथ्यात्व प्रपचस्याभिधीयते । ब्रह्मणोपि चमिथ्यात्व ततएवाभिधास्यते ॥ ब्रह्मणोयदि दृश्यत्व व्यावहारिकमु च्यते । प्रपचस्यापि दृश्यत्व तात्त्विक किं लयेष्यते ॥ * ॥ अपिच स सारमिथ्यात्वेपि किंनिवृत्तिशब्देन प्रतिभासमानमिथ्यार्थ प्रध्वसनमभि प्रेय तदर्थमपरोक्षधीगमेषण, उततद्विषयज्ञानप्रध्वसन, आहोस्वि त्तत्कारणोच्छेद, अथवा तथाविधज्ञानान्तरानुत्पाद, उततद्विप रीतविषयावगाहरूपविषयापहार, यद्वा तद्विषयसत्यताध्यवसायश स्त्रिय, अथान्यदेव किंचिदसाव्यवहारिकमिति ॥ नाद्य क्वचिदपि मिथ्यार्थस्य प्रध्वसाभावात, " प्रध्वसोहि स्वरूपस्य प्रच्युति प्रतिपाद्यते,

---

धयिष्याम इत्यर्थ । सत्यत्वसाधना न्मिथ्यात्वस्यासिद्धिः सिद्धा, सत्य त्वेवा मिथ्यात्वेवा प्रमाणबला दीश्वरसकल्पनिवर्त्यत्वस्यावश्यकत्वा द न्यथा सिद्धिस्सिद्धा । (तरतिशोकमित्यादि) ननु - उपासनस्यापि ज्ञानत्वात् कथ ज्ञानमात्रनिवर्त्यत्वस्य निरासइतिचेत्, न, ध्यानादिभिरस्यैव परेण ज्ञानत्वाङ्गीकारात तन्निवर्त्यत्वस्यैव तदिष्टत्वा त्तस्यैवेह निरस्त ताभिधानेन दोषाभावात । किञ्च, उपासनादिनानिवृत्तौ मुमुक्षादिस हकारिणोपेक्षितत्वात् न ज्ञानमात्रनिवर्त्यत्वम्, तन्मतेतु उपासना दि सर्व ज्ञानार्थ मपेक्ष्यते, ज्ञानेतु बन्धनिवृत्तौ न किंचि दपेक्ष्यतइति । युक्ति युक्तता । ( व्यावहारिकमिति ) तथाच हेत्वसिद्धे र्नमिथ्यात्व साधनमितिभाव. । किं मिथ्यार्थोस्ति, उत न, द्वितीय आह, ( प्रध्वस. ईति ) विद्यमानतामात्र सत्यत्व, नातिरिक्त अनिरूपणादितिभाव. ।

स्वरूपसत्यताभावे कथं प्रच्युतिरुच्यते ॥ सत्यपि तस्मिंस्तेन तदुच्छे
दायोगात् । अन्यथा बाधकज्ञानात्पूर्वं सुषुप्ते द्रष्टरि पुरुषे शुक्तिरजता
द्यारोपितप्रसङ्गात् । सन्निधीनसत्ताकस्य तस्य तावन्निवृत्तिरेवहि निवृत्तिः ।
आहुश्च अरोपस्य निवृत्तिरत्ना दारोपस्यापि सक्षयः । तस्य स्वरूप
शून्यस्य कानिवृत्तिरिति कथ्यते ॥ न द्वितीयः - तस्य बाधकज्ञानाभावेऽपि
बाधकज्ञानवदेव स्वरसनाशहेतुभिरनादिदोषव्यतिरिक्तैर्विनाशितत्वात् ।
अन्यथा नुदितबाधकज्ञानस्य भ्रान्तस्य सुषुप्त्याद्यभावप्रसङ्गात् । तथाहुः
न भ्रान्तिर्बाधकज्ञानात् नियमेन निवर्तते । नस्याद्धि भ्रान्तचित्तस्य
सुषुप्तौ भ्रान्तिसक्षयः इति ॥ यद्यपि — उत्तरज्ञानमात्रमपि संस्का
रादिः पूर्वज्ञाननिवर्तकमिष्यते — तथापि, यत्किञ्चिदविरुद्ध
विषयात् परोक्षज्ञानादपि पूर्वज्ञाननिवृत्त्युपपत्तौ विरुद्धविषयप्रत्यक्ष
ज्ञानाभिगणानिष्फल । नच तृतीयः भ्रान्तिज्ञानकारणानुच्छेदे यथार्थ
नियतप्रत्यक्षज्ञानानुदयात् । नह्यङ्गुल्यवष्टम्भतिमिरादिदोषेष्वनुवर्तमानेषु
चन्द्रैकत्वसाक्षात्कारसम्भवः । सम्भवेनाकिंतदुच्छेदेन । प्रत्यक्षानुवर्त्यर्थं त
दुच्छेदइतिचेत् , न, तत्सामग्र्यनुवृत्तिमन्तरेण तदुच्छेदेऽपि तदसिद्धेः ,
तस्यानानुवर्तमानाया तदयवानेऽपि विरोधाभावात् । स्वाभाविकप्र

---

आह । (सत्यपीति) तेन - ज्ञानेनेत्यर्थः । (अन्यथेति) नचेष्टापत्तिः ।
सुषुप्तिकाले मुद्गरादिना शुक्तिनिवृत्तौ यदि रजतस्यापि निवृत्तिः ,
तदा ज्ञानानिवर्त्यत्वभङ्गात् , अनिवृत्तौ निरधिष्ठानाध्यासप्रसङ्गा
त् । दूषणान्तरमाह (सन्निधीति) भ्रान्तिज्ञानेत्यादि-दोषस्य तत्वज्ञान
प्रतिबन्धकत्वादितिभावः । (सम्भवेचेति) तत्वज्ञानोत्पत्त्यर्थंहि भ्रान्ति
सामग्र्युच्छेदकत्वेन, तस्यासत्यामपि तत्वज्ञानोत्पत्तौ किन्तदुच्छेदकल्प
नेनेत्यर्थः । *द्वितीयं प्रत्यक्षज्ञानेत्वत' माह*, तत्सामग्र्यनुवर्तनेन वा,
द्वितीये दोषमाह(तत्सामग्रीति)साक्षात्कारसामग्र्यभावभ्रमसामग्र्युच्छेदेऽपि
तत्साक्षात्कारानुपपत्तिरित्यर्थः । आद्ये दोषमाह (तस्यानेति) तत्वसाक्षा
त्कारसामग्रीसत्वे भ्रमसामग्रीसत्वेऽपि मायामिरन्यापरोक्षवत् द्विती

त्वक्षप्रतिबन्धकतया तदुच्छेदकल्पनामितिचेत्। किमत्र स्वाभाविकत्वं, किंसामग्रयधीनत्वास्वरसवाहित्व, उतनित्यस्वाभाविकत्वम्। आद्येप्रागपि कथ तदवस्थानेप्रत्यक्षोदयः अन्योन्याश्रयणात्। द्वितीयेपि नित्यस्वाभाविकप्रत्यक्षस्यच किन्नामप्रतिबन्धकम्। अयमत्रसंग्रहश्लोकः॥ भ्रान्तिकारणसद्भावेप्रत्यक्षस्यहासभवं। सम्भवेनिष्फलैवास्या स्तदुच्छेदस्य कल्पना॥ स्वानुवृत्त्यर्थमुच्छेद स्सामग्र्यैवानुवर्त्तनात्। प्रतिबन्धनिवृत्यर्थमुच्छेदेप्रथमं कथं॥ प्रत्यक्षकारणोच्छेदेतदुच्छेदस्ततोपिचेत्। अन्योन्याश्रयणंतुस्या त्प्रतिबन्धोनचात्मनीति॥ नापिचतुर्थ, प्रागभावस्यासाध्यत्वात्, तदनुवर्त्तनस्याप्यंतत स्तत्प्रतियोगिकारणोच्छेदको

---

पादे स्प्युत्पत्तिसंभवादित्यर्थ (नित्येति) नित्यत्वात्मकस्वाभाविकत्वमित्यर्थं। किं प्रतिबन्धकनिवर्तकं नित्यज्ञानमेव, उत स्वरसवाहि। आद्ये दोषमाह (अन्योन्येति) (द्वितीये दोषमाह (नित्येति) नित्यं प्रतिबन्धकस्याभावात्, तन्निवर्तकत्वत्रस्वाभाविकप्रत्यक्षस्य कल्प्यमित्यर्थः। ननु- भ्रान्ते पुनरप्यनुत्पादार्थं तत्सामग्र्युच्छेदकत्वम् प्राथमिकप्रत्यक्षस्य कल्पनीयमितिचेत्, न, सामग्र्या मिथ्यात्वे तस्या अपिस्वरूपतस्स्वाभाविन प्रच्युत्यसंभवात्तस्या अपि अनिवृत्तिस्तद्भ्रान्तिकारणनिवृत्तिरित्येव वाच्यम् तत्राप्येवमित्यनवस्था, सत्यत्वे नापरोक्षज्ञाननिवर्त्यत्व तवेष्टमितिभावः। स्वाभाविक प्रत्यक्ष प्रतिबन्धकतया तदुच्छेदकल्पन मित्यत्र प्रागुक्तविकल्पे प्रथमशिरसि दूषणमाह। (प्रतिबन्धेति) द्वितीयेपि पूर्वोक्तविकल्पमभिप्रेत्य प्रथमशिरसि दोषमाह (प्रत्यक्षमिति) प्रत्यक्ष भ्रान्तिकारणोच्छेदे सत्येव वाच्यम्, तस्य त्वया प्रत्यक्षप्रतिबन्धकत्वोक्ते, तदुच्छेदस्तु यदि प्रत्यक्षेण स्यात्, तदान्योन्याश्रयइत्यर्थः। द्वितीय आह (प्रतिबन्ध इति) आत्मरूपे अपरोक्षे न प्रतिबन्धकं नित्यत्वादित्यर्थ। क्वचित्तु न द्वितीयइत्यत प्रागेवान्योन्याश्रयणादितिपाठ, सतु सुगमः, सम्प्रदोपि तदनुसारेण योज्य (तदनुवर्तनस्येति) प्रागभावपरिपालनंहि सत्यां सामग्र्या कार्यविलम्बायोगात् प्रतियोगिकारण विघटनेनैव वाच्यम्, तच्च नि

र्दिनिक्षेपात् , तस्य च निरस्तत्वात् ॥ न पञ्चमषष्ठौ , परोक्षा दपि तत्सिद्धेः , प्रत्यक्षमपि हि द्विचन्द्रादिज्ञानमनुवर्तमानं प रोक्षेण चन्द्रैकत्वानुमानादिना बाध्यते, तावतैव चन्द्रद्वित्वाध्यवसा यः शाम्य जायते । अन्यथा देहात्मभ्रमस्यात्मानुमानेनागमेन वा देहातिरिक्तात्मविलम्भो न स्यात् । परोक्षबाधे भ्रमोऽनुवर्तत इति चेत् , न तुल्यमेतदित्युक्तत्वात् ॥ सजातीयपरोक्षेऽपि बाधकारणस भवात् । अगुल्यादिभिर्नस्तभाति स्पन्दनस्तनुभिः ॥ नापि सप्तम , तस्य नाव्यवहारिकत्वेने तदर्थोपायोपदेशायोगात् , अन्वयव्यतिरे काभ्यां च शब्दस्य परोक्षपक्षपातविरहाच्च । एवं सामान्येन परोक्षज्ञा नानपेक्षाया युक्त स्तत्कारणविशेषविचिन्त्यनुत्थानमेव शब्दज स्यप्रत्यक्षत्वादस्येत्यभिप्रेत्य भाष्यकारैरिह न सरभ कृत "सत्या सामग्रया ज्ञानानुपपत्त्यनुपपत्ते " रित्यादिना । "द्रष्टव्य"इत्यादेर्दर्शनसमानाका रविधिपरत्वोक्तेश्चेद मपि दूषितमस्त । समन्वयाधिकरण पूर्वपक्षेतु परोक्षैव दूषयिष्यति " न च शब्दस्य प्रत्यक्ष ज्ञानं जनयतीति वक्तु युक्त, तस्यानिन्द्रियत्वा"दित्यादिना । अस्तु वा कथञ्चिदपरोक्षपरि शेष । तथापि – प्रत्यक् पराङ्मुखत्वादि लक्षणविरुद्धव्याप्तयेन्द्रिय परित्यागे तुल्यन्यायतया वाक्यस्यापि परित्यागप्रसङ्ग ।

---

रस्तमित्यर्थ । भ्रमानुवृत्तिरेव सत्यताध्यवसायशोधिलय तच्च परो क्षज्ञानान्नेति शङ्कते ( परोक्षेति ) ( उक्तत्वादिति ) प्रत्यक्षसिद्धेऽपि शुक्तेस्त्वत्वे विमलभवचाक्या द्रजतधी रुदेत्येवे त्युक्तत्वादित्यर्थ । ( अपरोक्षेऽपीति) भ्रान्तिरपीत्यन्वय । ( एवमिति )अपरोक्षज्ञानद्वारा प तदर्थस्य श्रवणाद्युपायस्योपदेशायोगात् । प्रत्यक्षपरिशेषमभ्युपगम्य वा क्यपरिशेष दूषयति ( अस्तु वेति ) ( प्रत्यगिति ) आदिशब्देन मन स्त्यागहेतु रसोढमित्यस्मिन्नर्थे ऽ स्वातन्त्र्य, मनुमानपरित्यागहेतुरप रोक्ष्यविद्वेषिष्यश्च गृह्यते, प्रत्यक्पराङ्मुखत्वादिलक्षणेन साध्यविरुद्धेन व्याप्तश्चेत्यर्थ ( तुल्येति ) वाक्यस्या प्यापरोक्ष्य विद्वेषणीयत्वादि

श्यता। अनक्षाम्बनचेतु कथन्नु बलवत्तरम्॥ यत्पुन.अपरोक्षज्ञानस्य मोक्षहेतुत्वं श्रुतिसिद्धमिति। तान्मात्राभ्युपगमेपि न नः काचित् क्षति।

यत्तु - शब्दादेव शब्दस्यापरोक्षधीहेतुत्व दर्शितम् । तदपि हास्यं, अन्यपरत्वस्य आकुमारंप्रसिद्धे., साक्षात्कारहेतोर्मनस स्मरायतया दृढव्यवसायहेतुतामात्रेणवा तदुपपत्ते । यथाङ्गनप्रणचक्षुष्ट्वादेरपि स्वीकर्तव्यत्वात्। "श्रुतिस्मृतीतु विप्राणा नयने द्वे" इतिहि श्रूयते। "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिपु परोक्षव्यवसायमात्रमेवोच्यते। यत्तु विज्ञानमिति विशेषणेन विशेषविषयत्वासिद्धा निश्चयहेतुत्वे सिद्धेपि सुशब्देनविशेषणा दपरोक्षनिश्चयहेतुत्व सिद्धमिति। तदप्यत्यन्तपरिहास्य, अकम्पनीय व्यवसायविवक्षया सुशब्दप्रयोगात्। य पुन तत्त्वमस्यादिवाक्यजन्यज्ञानत्वादिति प्रयोग ,स तज्जन्यश्रावणज्ञानेनैकान्तिक । अतिप्रसगश्च - वाक्यान्तरेष्वप्येव प्रयोक्तु शक्यत्वात्। परिहारस्यच समत्वात् । विषयजन्येपुच व्याप्तेरसकोचात्॥ नवाक्यजन्यताहेतु. प्रत्यक्षत्वेतु किं पुन । अर्थजन्यत्वमेवस्यात्

---

यन्धः परिभवइतिचेन्न, सञ्जातेप्यपरोक्षेपीत्यादिना अपरोक्षबाधेपि ध्रमाद्यनुवृत्तेः प्रागेवदर्शितत्वात्। (कथन्न्विति) द्वैतविषयाया दविरोधा द्वलावलचिन्तैव का इतिभावः। निश्चितपदेन निश्चयहेतुत्वे सिद्धेपि सुविशेषणं - विशेषविषयत्वार्थस्या दित्यत्राह (विज्ञानमिति विशेषणे न विशेषविषयत्वसिद्ध्येति) । (तज्जन्येति) श्रवण - श्रोतव्यइति विहितं विवक्षितम्, ततो जात- श्रावण, साधमिकपरोक्षज्ञाने व्यभिचारइत्यर्थः। अग्निहोत्रादिवाक्ये प्रयोगो प्रयोजकइत्यत्राह (परिहारस्यचेति) मिथ्यार्थानिवृत्त्या अपरोक्षज्ञानकल्पनस्य निरासादिति भावः। योगजधर्माद्यजन्य जन्यत्वावच्छिन्नसाक्षात्कारित्वव्यापकं विषयजन्यत्वमुपाधिश्चेत्याह (विषयेति) (नवाक्येति) प्रत्यक्षत्वेतु न वाक्यजन्यत्व, हेतु - प्रयोजकः, किन्तु अर्थजन्यत्वमेव हेतुस्स्यात् ततश्च

तत स्सोपाधिकत्वयं ॥ वाक्यविषयप्रत्यक्षेपिवाक्यस्यैवार्थत्वा दर्थजन्यत्वोपाधेः साध्यव्यापकत्वाविशेषः । यश्च- स्वप्रकाशार्थोपदेशरूपत्वात् स्वतः प्रत्यक्षार्थविषयत्वाद्वेति, सोपि पूर्ववदेवानैकान्तः । दृष्टान्तस्यच साध्यविकलत्वं दर्शितमेवेति ॥

प्रतिप्रयोगश्च । विगीतंवाक्यं नस्वार्थविषयप्रत्यक्षज्ञानजनकं- वाक्यत्वात्

---

यं सोपाधिकइत्यर्थः । किं याव तत्वमस्यादिवाक्यव्यस्तयः पक्षः, इतश्रवणाद्यनन्तरभाविव्यावर्त्तितमात्रं ? आद्ये मननाद्याप्रथमिकस्य कतावंशतोबाध मभिप्रेत्य द्वितीये तत्रैव व्यभिचारमाह (सोपीति)(दृष्टान्तस्येति) स्वप्रकाशत्वस्य दशमत्वस्यचा स्वप्रकाशत्वात्, स्वत प्रत्यक्षत्वाभावाच्चेतिभावः । ( विगीतमिति )

ननु - साध्येस्वशब्दस्य जन्यपरत्वे तत्त्वमसिवाक्यार्थविषय प्रत्यक्षस्याप्रसिद्धेः तज्जनकस्याप्रसिद्ध्यातद्भेदसाधनमनुपपन्नं, जनकपरत्वे कस्यापिवाक्यस्यस्वार्थगोचरप्रत्यक्षजनकत्वाभावात् प्रतियोग्यप्रसिद्ध्या तद्भेदसाधनमनुपपन्नं, स्वार्थशब्देनस्वजन्यज्ञानविषयत्वं विवक्षित्वा दन्द्रियेप्रतियोगिप्रसिद्ध्युपपादनेबाधः,स्वस्यैवस्वजन्यश्रावणज्ञानविषयतयास्वार्थत्वात् विषयतयास्वगोचरज्ञानजनकत्वाच्च । स्वार्थशब्देन भिन्नत्वमात्रं विवक्षित्वा स्वभिन्नविषयप्रत्यक्षजनकं नभवतीत्युक्तौ बाधोदृष्टान्तासिद्धिश्च, स्वजन्यश्रावणज्ञानस्य तकारत्वादिविषयत्वात । नन्वस्तु स्वशब्दोभिन्नपरएव, नच-तत्त्वमसिवाक्यार्थप्रत्यक्षाप्रसिद्धि , घटादिगोचरप्रत्यक्षस्यैव प्रमेयत्वसामान्यलक्षणप्रत्यासत्तिजन्यस्य तत्त्वमसिवाक्यार्थ गोचरत्वादितिचेन्न । बाधादेवतत्वमसिवाक्यगोचरसामान्यलक्षण प्रत्यासत्तिजन्यज्ञानस्यापि तत्त्वमसिवाक्यार्थगोचरतया वाक्यस्य तत्र जनकत्वात् । नच - सामान्यप्रत्यासत्तिजन्यज्ञानेसन्निहितविषयप्रतियोगिकलौकिकप्रत्यासत्ते जनकत्वाभावा त्तस्य प्रत्यासत्तिद्वारकं जनकत्वमितिवाच्यं । सन्निकृष्टविषयांशे लौकिकप्रत्यासत्तेर्विद्यमानतया तस्याजनकत्वस्या ऽवर्जनीयत्वात् । नद्यनतिवद्धा सामग्रीकार्यंजनयतीतिनियमोस्तिवस्तुशब्दस्य, 'कस्यचित्

प्रतिबन्धकत्वकल्पनेच न किञ्चित्प्रमाणमस्ति । अस्तुतर्हि जनकपरमेव, नच - प्रतियोग्यप्रसिद्ध्यासाद्ध्याप्रसिद्धिः, शब्दोवर्ततइति वाक्येस्वार्थविषयप्रत्यक्षजनकत्वस्य प्रसिद्धत्वादितिचेत्, न, तत्रैव-व्यभिचारात् । अस्तुतर्हिस्वजन्यज्ञानविषयप्रत्यक्षजनकत्वाभावस्साद्ध्यः, इन्द्रियेच प्रतियोगिप्रसिद्धिः, नचबाधः, विषयतातिरिक्तरूपेण स्वजन्यत्वस्य विवक्षितत्वात्, वाक्यप्रत्यक्षस्य विषयतारूपेणैव तज्जन्यत्वात्, स्वकरणकत्वया स्वजन्यत्वमिहविवक्षितमितिचेन्न । शब्दोवर्ततइत्यत्र व्यभिचारात् । अस्तुतर्हि स्वभिन्नविषयप्रत्यक्षजनकत्वाभावः, नच तत्कारत्वादि प्रत्यक्षजनकत्वात् बाधः, स्वगोचर प्रत्यक्षाविषयत्वस्य स्वभिन्नविशेषणत्वात्, यद्यप्येवं नेन्द्रिये प्रतियोगिप्रसिद्धिः, तथापि शब्दस्पर्शादिप्रत्यक्षजनकेशरीरेप्रसिद्धिरितिचेन्न । सर्वस्यापि शरीरादिविषययोगिप्रत्यक्षादिविषयत्वेनाप्रसिद्धेरिति ।

उच्यते - साध्येस्वपदभिन्नपरमस्तु, साद्ध्यप्रसिद्धिश्च, सामान्यप्रत्यासत्त्या सर्वविषय प्रत्यक्षजनकेन्द्रिये । नचोक्तबाधः, स्वार्थविषयत्वावच्छेदेन प्रत्यक्षजनकभेदस्य साद्ध्यत्वात्, इन्द्रियस्य प्रत्यासक्तिभूतसामान्याश्रयसर्वविषयावच्छेदेन प्रत्यक्षजनकत्वात्, विषयस्य च स्वविषयतावच्छेदेनैव विषयतयाजनकत्वात् । न च - शब्दोवर्ततइत्यत्र व्यभिचारः, स्वागोचरवृत्तिकवाक्यत्वस्य हेतुत्वात्, शब्दावर्ततइत्यस्य स्वगोचरवृत्तित्वात् । अस्तुवास्वपद जनकपर, नचोक्तव्यभिचारः, पूर्ववदेवहेतुविशेषणात् । अस्तुवाविषयतानवच्छिन्न स्ववृत्तिकारणतानिरूपितजन्यताश्रयज्ञानविषयप्रत्यक्षजनकत्वाभावस्साद्ध्यः-प्राग्वदेवहेतुविशेषणाच्चन पूर्वोक्तव्यभिचार । अस्तुवास्वकरणकत्वस्वजन्यत्व, नच पूर्वोक्तव्यभिचार,ज्ञानप्रत्यक्षपदव्यत्यासेन स्वकरणकप्रत्यक्षविषयकज्ञानजनकभेदस्य साध्यत्वात् । अस्तुवा स्वगोचरप्रत्यक्षाविषय स्वभिन्नविषयप्रत्यक्ष जनकत्वाभावः, शरीरादौच प्रतियोगिप्रसिद्धक्ता, नच - सर्वस्य शरीरादिविषययोगिप्रत्यक्षादिविषयत्वात् साद्ध्याप्रसिद्धि, योगजधर्मांचजन्यत्वेन स्वगोचरप्रत्यक्षविशेषणात् । अत्रच साध्येवाक्यत्वादित्येव हेतुरिति । प्रत्यक्षकरण नभवतीतिवा, विषयतातिरिक्तरूपेण प्रत्यक्षज

ज्योतिष्टोमादिवाक्यवत् । तथा विगीतार्थो न स्वविषये प्रत्यक्षा वाक्यजन्य त्वेसति वाक्येतराविषयत्वात् स्वर्गयागादिसम्बन्धबुद्धिवत् । नचाप्रश्रुतिविरुद्धतयाकालात्ययापदेशः, श्रुतेरन्यपरत्वस्थापनात् । नच दशमस्त्वमसीत्यादि वाक्येन तज्जन्यज्ञानेनवा नैकान्तिकता, तत्र साक्षात्कारप्रसङ्गस्यापि निषिद्धत्वात् । नच पूर्वैरेव हेतुभिस्सप्रतिसाधनता, उपलम्भानुरोधेनातिप्रसञ्जकव्याप्तिमूलतया प्रबलत्वात्, समत्वेपि प्रकरणसमत्वादनदशायामन्योन्यप्रतिरोधस्येष्टत्वेन तत्प्रसङ्गानुपपत्तेश्च । न च विपक्षे बाधकविरहादप्रयोजकता, अविशेषात्, शब्दान्तराणामपि प्रत्यक्षज्ञानजनकत्वस्य बाधकस्यच सत्वात् । नचाप्रत्यक्षार्थविषयतयातेषां तदनुत्पादकत्वमिति वाच्यं । तथाप्ययघट दशमोय मित्यादिवाक्याना

---

नकं न भवतीतिवा, प्रत्यक्षजनकतावच्छेदक विषयतातिरिक्तयावत् स्ववृत्तिधर्मवत्त्वमिति वा साध्यम् । अत्र चरमसाध्ये विषयतातिरिक्तपदं बाधव्यभिचारवारणाय । एवञ्च स्वतोपरोक्षार्थविषयत्वादेरनवच्छेदकत्वसिद्धेरिष्टसिद्धिः । एतेषु त्रिष्वपि साध्येषु वाक्यत्वादित्येव हेतुरिति । (विगीतेति) तत्त्वमस्यादिवाक्यजन्यात्मगोचरार्थीः पक्षः । स्वप्रकाशतया स्वांशे प्रत्यक्षत्वात् बाधवारणाय साध्ये स्वविषयइत्युक्तम् । वाक्येतिघटप्रत्यक्षे व्यभिचारवारणाय विशेषणं । वाक्यप्रत्यक्षवारणाय विशेष्यं । वाक्येतरपदं - वाक्यतरमात्रपरं । तेन वाक्यजन्यत्वे सतिवाक्याविषयत्वपर्यवस्यति ( अनतिप्रसञ्जकेति ) अग्निहोत्रादिवाक्येष्वनुत्य परोक्षधीजनकत्वस्य तन्न्यायेन सम्भवाद्यथा तत्त्वमस्यादिवाक्यजन्यज्ञानत्वेनापरोक्षधीजनकत्वसाधने तिप्रसङ्ग नतथास्मदुक्तव्याप्ताविति बलवत्त्वमिति भावः । ( समत्वेपीति ) स्थापनानुमानस्यहि प्रतिरोधो दोषः प्रत्यनुमानस्य तु स्थापनाप्रतिबन्धैकफलत्वात्र प्रतिरोधो दोष इत्यर्थः । वस्तुतोस्त्येव विपक्षे बाधकमित्याह ( नचेति ) ( अविशेषादिति ) ज्योतिष्टोमादिवाक्य व्यावृत्ता वान्तरोपाधेरभावा दित्यर्थः ॥ प्रत्यक्षार्थविषयत्व तत्त्वमस्यादिवाक्ये विगप, ज्योतिष्टोमादिवाक्येतु

विरोधेन युक्तः कल्पनपरिग्रहः " इति न्यायात् । यदि च - यत्किञ्चि
द्विपदो बाधकमित्यभिमानमात्रेण परिगृह्यानुमिनोति । तदा - ज्यो
तिष्टोमादिवाक्येऽपि भवादृशः कोऽपि तथा तदभिमत्या अनु
मिनुयादेव । एवं सिद्धसाधनता नैकान्तिकत्वा तिप्रसञ्जकता भास
सामानयोगक्षेमत्वान्यथासिद्धत्वादि दोषदूषितत्वा दनुमानविशेषो
त्प्रेक्षणमेव निपुणधियां मिथ्याद्वयितत्वस्य प्रामाणिकत्वा
नुमिति मन्तर्गता सूचयति । अतएवास्मिन्नर्थे महाविद्यादिप्रयोगा
न्तरमनोरथोऽपि भग्नः । यत्तु शब्दस्य प्रत्यक्षान्तर्भावप्रसङ्गे
रतो परोक्षब्रह्मात्मविषयशब्दान्यथावेसानि अपरोक्षप्रमिति कारणत्व
प्रत्यक्षान्तर्भावप्रयोजकमित्युक्तं । तत् तत्त्वमस्यादेरपरोक्षधीजनकत्वे
वक्तव्यम् तत्तु नाद्यापि सिद्ध्यतीति तत्प्रसङ्गो दुर्वारः । तदे
व वाक्यजन्यसाक्षात्कारासिद्धेः परिशेषात् तज्जन्यपरोक्षज्ञानेनैवाप्र
तिबद्धसामग्रीसमुद्भवेन बाधदर्शनेऽपि स्थितौ श्रवणादिविधिनैरर्थक्यं प्रागुक्तं
सुस्थितमेव । नतरां श्रुतवेदान्तानां संसारानुवृत्तिदर्शनविरोधो दुर्वारः ।
बाधितानुवृत्तिस्तु बाधिता जीवन्मुक्तिविचारेण दूषयिष्यामः ।

संगः । देहातिरिक्तात्मानुमिति गोचरसाक्षिविषयाज्ञानाभावात् पूर्णब्र-
ह्मविषयाज्ञानस्य भिन्नविषयानुमित्या निवृत्त्यसम्भवात् । शुद्धे सत्य
ज्ञानानन्दात्मके ब्रह्मणि नियमेन पक्षसाध्यादि वैशिष्ट्य विषयानुमि
ति रसंभवत्येव । तत्त्वमस्यादिवाक्य सन्निधावेव " तस्य तावदेव चि
र यावन्नवि मोक्ष्य " इति श्रवणेन ' वेदान्तविज्ञान सुनिश्चितार्था ' इति-
वचनेनच श्रुतिजन्यज्ञानस्यैव मुक्तिसाधनत्वावगमात् । नचैवं - आत्मा
नुमितेरपि प्रत्यक्षप्रमात्वेन व्यवहारप्रसङ्गः प्रत्यक्षव्यवहारस्येन्द्रि-
यजन्यमात्रगोचरत्वात् । नच चक्षुरादाविवापरोक्षप्रमाणव्यवहारापत्तिः ।
आत्मानुमानं ह्यन्यत्र लिङ्गापरोक्षताविशिष्टार्थविषयतया देवादपरोक्षं नाप
रोक्षतया निर्णितं । चक्षुरादिकंत्वर्थ परोक्षतायां प्रयोजकमित्यने
नैव विशेषणत्वमात्रगोचरापरोक्ष व्यवहारः । तस्मात् तत्त्वमस्यादि
वाक्यजन्यज्ञानं न परोक्षं अपरोक्षार्थविषयत्वात् चाक्षुषज्ञानवत् । तत्त्वमसि
वाक्यार्थ विषयज्ञानमपरोक्षं-अविद्यानिवर्तकत्वात् सम्प्रतिपन्नवत् । नचेन्द्रि
यजन्य वस्तुभावेः, त्वद्भिन्नताजन्यप्रत्यक्षे क्षुधादि प्रापके दशमस्त्वमसीति
ज्ञानेच साध्याव्यापकत्वात् । नच जन्यज्ञानस्य परोक्षत्वाभावे इन्द्रियजन्यत्व
मुपाधिः, जन्यज्ञानापरोक्षत्वे लिंगजन्यत्वयत्तस्याप्यप्रयोजकत्वात्, अपरोक्षा
र्थविषयत्वैवं यत्रापरोक्षताप्रयोजन तस्यापरोक्षत्वाभावव्याप्तेश्च । अत
एवनशब्दाजन्यत्वमुपाधिः । अन्यथा तत्त्वमसिवाक्या दपरोक्षज्ञाना
भावे अविद्यानिवृत्त्यभावान्निर्मोक्षप्रसंगश्चेति ।

अत्रोच्यते - अस्तितावल्लोके ज्ञानस्यापरोक्षत्व व्यवहा
रः, तत्पयर्थगत मपरोक्षत्व तद्विषयत्व निबन्धन एवज्ञानतद्व्य
वहार इत्युच्यते, तदा देवदत्तेन साक्षात्क्रियमाण घटविषयकशाब्द
ज्ञान यज्ञदत्तस्य जाते तदुभयवेदिन शाब्दज्ञाने अपरोक्षव्य
वहार प्रसंगः । स्वाश्रय प्रत्यपरोक्षार्थ विषयत्व निबन्धनो ज्ञानेऽपरो
क्षत्वव्यवहार इतिचेत, स्वाश्रयं प्रतीत्यत्र विवक्षित स्वाश्रयभूत
संवन्धित्वं,किं स्वाश्रयाभिन्नत्व,अन्यद्वा? नाद्यः, लौकिकानां प्रमातृभेदेपि
प्रतीतावपि, ज्ञाने अपरोक्षव्यवहारात् । नद्वितीयः, अनिर्वचनात् । स्वाश्रय
संबन्धपरोक्षभिन्नत्वंतदिति चेन्न , प्रदीपत्वेनभासमानस्य प्रत्यक्षादिज्ञा
परोक्ष चैतन्यस्य विषया क्षेदस्यैव प्रतीतेः । तस्मात् स्वाश्रयसंबन्ध

र्थगत स्वीकार्यं स्यात् । किंच – वह्निमनुमिनोमीतिवत् पर्वतमनुमिनोमी त्यव्यवहारात् अनुमेयत्वमप्यनुमितिविषयत्वा दन्यत्स्यात् । तस्मात् ज्ञानगतमेवापरोक्ष्य , "यत्साक्षादिति" श्रुतिस्तु स्वप्रकाशतादिपरत्वेनाप्युपपन्ना, साक्षादिति - घटादाविव ज्ञानान्तराधीन साक्षात्त्वस्य निषेधसंभवात् । किंच - यदि स्वानुभवइव परोक्षत्वानुभवेऽपि तदधीन नामगोचरस्स्यात्, तदा तद्वदपरोक्षत्वमपि निष्प्रतियोगिकं स्यात् । अत - किंचित् प्रति कदाचिदपरोक्षं कंचित् प्रति कदाचिन्नेति न स्यात् । यदप्युक्तं- अपरोक्षार्थ विषयत्वं वृत्ते रपरोक्षत्वमिति । तत्रापरोक्षत्वमित्यस्य अपरोक्षव्यवहारनिमित्तमित्यर्थ । तथाच प्रत्यक्षव्यवहारस्य इन्द्रियजन्यमात्रगोचरत्वेति स्ववचनविरोध । नच – नेदं लौकिकव्यवहारनिबन्धनं, किन्तु – परीक्षकव्यवहारनिबन्धनमिति वाच्यम् । एतन्य नैय्यायिकाद्यपरोक्ष व्यवहारनिबन्धना भावात् । नच - स्वसमयपरीक्षकव्यवहारनिबन्धनं, त्वदभिमत तदभिमतापरोक्षत्वसाधनेऽपि उभयसंप्रतिपन्ना परोक्षनिष्ठस्यास्मदभिमतस्य परोक्षव्यवहार निबन्धनस्य शाब्दज्ञाने असाधनेनार्थान्तरत्वात् । नच – सर्वत्रापि इदमेव व्यवहारनिबन्धनं , नतु - त्वदभिमत, इदमत्र शाब्दज्ञानेप्यस्तीति साध्यतइति वाच्यम् । स्वोक्तिविरोधाद्दे दर्शितत्वात् । किंच – किमत्रापरोक्षार्थविषयत्वसाध्यते , उतापरोक्षत्वेन नान्यत्रापविषयत्व ? । आद्येऽपि ब्रह्मणोऽपरोक्षत्वे सिद्धे तद्विषयत्व साध्यते, उतासिद्धे । नाद्य सिद्धसाधनात् । नहि तत्त्वमस्यादिवाक्यस्य ब्रह्मविषयत्वे कश्चित् विप्रतिपद्यते । नन्वस्तु द्वितीय पक्ष , तत्र ब्रह्मविषयत्वस्य सिद्धत्वा दपरोक्षत्वसाधने पर्यवस्यतीति चेन्न । स्वप्रकाशत्वादिना प्रतितस्यापि सिद्धत्वात् , अ य प्रति साधनेऽपि सिद्धसाधनमेव नैय्यायिकादिभिरपीश्वरस्यापरोक्षत्वाङ्गीकारात् । ननु - ते स्वकीयापरोक्षज्ञानविषयत्वेना परोक्षत्वमङ्गीकुर्वंति स्वरूपत आपरोक्ष्यमगीकृतमितिचेत तर्हि घटादावपि दृष्टा तादृश वैलक्षण्य साध्यविकलो दृष्टान्त । घटत्वाधिष्ठानचैतन्याभेदादापरोक्ष्योपपादने चैतन्य अपरोक्षत्वसिद्ध्यनिर्वाह्यां

श्रीमतेरामानुजायनम ।
श्रीमतेनिगमान्तमहादेशिकायनम ।
॥ अथ अष्टमोपाद ॥



शास्त्रैक्येनिपयायभेदनियते सगत्यधीनक्रमे
कर्मालोच्य तदगिकामथपराविद्यामुपादित्सुभि ।
यस्त द्वेद्यतया स्वय फलतया प्यारोहतिज्ञेयता
कुर्वीतेप विभु श्रिया सह मम स्वान्त निजान्त पुरम् ॥ * ॥

---

परिमितगुणानानादेवान् फलफलसाधना
न्यधिगतशुचस्सर्वदुष्ट समीक्ष्यवृणीमहे ।
हरिमधिगत[त्रि]त्र्यन्तार्था[र्य]हरेश्वरणौचत
त्प्रसदनकरीर्विद्या श्श्रुयन्तगाश्ववृणीमहे ॥ ॥

शास्त्रायमाणदृष्टान्ततर्कैकृत पूर्वापरागघटना विकसन्मुदेव ।
मीमासयाप्रकटितागमिताथसार्थ नित्य रमानिधिगुरु शरणप्रतीम ॥

( शास्त्रैक्यइति ) सर्वत्र प्रतिपाद्यैक्यादेवहि वाक्यैक्य, अत इ
हापि वेदार्थस्यवा स्वाराधनब्रह्मणोवा विषयत्वा दकग्रन्थता । आदिपदे न
व्याख्येयग्रन्थैक्य गृह्यते । तदैक्यादि वामनजयादित्यवृत्त्योरिवैक्यहेतु ।
अनेन वक्तृभेदात् भेदशङ्कानिरस्ता । ( सगत्यधीनइति ) त्रिवर्गप्रथमया
वण्यादिना क्रमेच सिद्धसतीत्यथ । ( परामिति ) सद्विद्यान्विका ब्रह्म
विद्यामित्यर्थ । ( तदिति ) परविद्याविषयतया फलतयाच विचा
यतामधिरोहतीत्यर्थ । ( कुर्वीतेति ) एव मीमासया प्राप्यत्वेन मा
पकत्वेनच निर्णेतव्योपि स्वस्वरूपमेव न्यायस्थानऽभिषिच्य स्वस्यैवप्रयो
जनतया मम स्वान्ते नित्य सन्निधत्तामित्यर्थ । न्यायतो निर्णये क्रिय
माणे देवतान्तरादिविरुद्धाभाना प्रसन्न तान्निषेध न्याय प्रपर्ययत सनि

इहनाव दानन्तर्यार्थे प्रचुरप्रसिद्धिक मथशब्द मादौ प्रयुञ्जानस्य सूत्रकारस्य तत्सम्भवे तदर्थते वाभिमते स्वर्गीकार्यम् । तत्सम्भवश्च यदि नियतपूर्ववृत्तमसाधारण तथाऽज्ञापने सप्रयोजनञ्च किमपि स्यात् , तदास्यात् । अन्यथा नस्यात् । यथा - "अथ योगानुशासन" मित्यादौ । नहि यदृच्छागत यत्किञ्चिन्निमेषोन्मेषादिक मक्षिकासञ्चारादिक वा पूर्ववृत्ततयात्र वक्तु युज्यते, तस्य सर्वत्र सम्भवात् , अभिधानप्रयोजनविरहाच्च । अतएव सर्वपुरुषव्यापारसाधारणापेक्षित भोजनादिपूर्ववृत्तत्वोक्तिरपि निरस्ता, विशेषनियमाभावात् । अव-धानामनस्संयोगादिकमपि न विचारविशेषप्रति विशेषहेतु, सर्व शास्त्रसाधारण्यात । सामग्रीतु तथास्यात् , तदुक्तिरपि यदि साम .

---

धाने तेषां प्रसङ्गएव नास्ती त्यन्त पुरशब्दप्रयुञ्जानस्यभाव । नहिराज्ञा मन्त पुरे पृथग्जनानां प्रसङ्गोस्ति, येन तन्निष्कालनाय यत्नः कर्तव्यः ।

इहवादे साधनचतुष्टय पूर्ववृत्त स्याथशब्दविवक्षितत्वनिरासपुरस्सर कर्मविचारपूर्ववृत्तत्व व्यवस्थाप्यते । तत्रा थशब्दस्यानन्तर्यार्थत्वे नि र्णीतेहि तच्चिन्तावकाश , अत उपोद्घातेनाथशब्दस्याऽनन्तर्यार्थत्व पूर्व पक्षिमुखेन व्यवस्थापयन् पूर्वपक्षमाह ( इहतावदिति ) नित्यानित्य विवेकस्यैव पूर्ववृत्तत्व मिति कुतो निर्धार्यते, अन्यस्यापि सम्भवादित्य त्राह ( तत्सम्भवश्चेति ) ( अथ योगेति ) तत्र हि सप्रयोजनाभिधा- नस्य नियतपूर्ववृत्तस्याभावा दथशब्दो धिकारार्थत्वेन व्याख्यातइत्य- र्थः । एव मन्यथा न स्यादित्येतस्योदाहरणं दर्शितम् । एवमपि - कथमन्येषां निरासइत्याशङ्क्याह ( नहीति ) यदृच्छयेत्यनेन नियमा भाव स्सर्वत्रेत्यसाधारण्याभावश्च ख्याप्यते । तथात्वज्ञापने सप्रयोजन ञ्चेत्यनेना पीद निरस्तमित्याह ( अभिधानेति ) अतएवे त्येत द्विवृ णोति ( विशेषेति ) भोजनादे रपेक्षितत्वात् पृथङ्निरास । ( अवधा नेति ) इन्द्रियाणा विषयान्तरासञ्चार : अवधान, विचारज्ञाननिय-

शीलत्वेनेण, तदपि सर्वकार्यसाधारण्यात् तदभिधानवैयर्थ्याच्च निरस्तम् । तेन सामग्रीविशेषविशेषक विशेषकारणमेव वाच्यम् । अत स्सप्रयोजनाभिधानासाधारण नियतपूर्ववृत्तवस्त्वन्वेषणे नित्यानित्य वस्तुविवेकादि साधनचतुष्टय 'पूर्ववृत्त, तस्यैव ब्रह्मजिज्ञासाया नियमेनापेक्षितत्वात्, तदुक्ते थाधिकारिविशेषप्रतिपादनार्थतया सप्रयोजनत्वाच्चेति यदुक्त तत्परामृशाम ।

तत्र नित्यानित्यवस्तुविवेकस्तावत्कथंभूतइति । किं इदवस्तुनित्यमिदं वस्त्वनित्यमित्येव मात्रा, उतनित्यानित्ययोर्वस्तवीति नित्यानित्यवस्तु तच्च नित्यानित्ययो र्धर्म - हेयत्वोपादेयत्वे इत्यर्थ इति वाचस्पतिकल्पित प्रकारइति' । तत्र नप्रथम । तस्य वेदान्तश्रवणात्पूर्वमसिद्धत्वात् । तन्नैवह्यात्मादेर्नित्यत्व वियदादेश्चानित्यत्व विविच्यते । तथाचान्योन्या श्रयणम् ॥ * ॥ वेदान्तश्रवणेसिद्धे नित्यानित्यविवेकसी । नित्यानित्यविवेकेन वेदान्तश्रवणस्थिति ॥ * ॥ अथ—यदि शास्त्रान्तरात्तद्विवेकइति मन्यसे । तदा विपरीतविवेकापत्ति । वियदादयोवैशेषिकादिभि नित्याएव परिगृह्यन्ते, आत्मादयश्च सौगतादिभिरनित्या अस्तीत्या । अथ दूरविप्रकृष्टप्रसाम्यप्रयोगशालित्वेन तद्विवेकइतिचिन्तयसि । तर्हि - तत्रैवा त्मानात्मविवेकसिद्धे किं ब्रह्ममीमांसया । अनन्यलभ्यहि शास्त्रफलम् । विशेषज्ञसार्थमिति चेन्, निर्विशेषे त

---

स पूर्ववृत्तत्वा दवधानात्ममनस्संयोगादेः पृथङ्निरास । ( तत्रैवेति ) आदिशब्देन कालादि स्वमतेन गृह्यते । ( विपरीतेति ) वेदान्ते यद्द्रष्टो नित्यानित्यविवेकोऽभिमत , तद्विरुद्धनिश्चयएव शास्त्रान्तरे भव तीति न तस्य तत्रोपयोगइति भावः । विरुद्धनिश्चय मेवोपपादयति ( वियदादयइत्यादिना ) ( तर्हीति ) आत्मानात्मविवेकार्थाहि ब्रह्ममीमांसा, तस्यच तत्रैव सिद्धे ब्रह्ममीमांसायां प्रवृत्ति र्नस्यादित्यर्थ । अनयापि तत्सिद्धे स्त्रापि प्रवृत्तिस्स्यादित्यत्राह ( अनन्यलभ्यमिति ) नियतापेक्षितेन शास्त्रान्तरेण विवेकसिद्धा वेतस्य निष्फलत्वमेव

रेत तद्व निराकरिष्यमाण साख्यादितन्त्ररपि नाभ्यसिद्धि । नहि त द्वा तात्मेति कश्चिद्विशेषइति न्यायात् अविरुद्धांश स्वीकुर्मइति चेत्, क स्तर्हि सौगतेपु ते प्रद्वेष । तेष्वपि भवदुपजीव्यानहजोर्थरा श्यस्सति । कथचायमर्थो न विरुद्ध अयन्तु विरुद्धइति वेदान्तश्रव णात् पूर्वमवग उसि? । तथाच तत्राप्यन्योन्याश्रयणम् । हितोपदे

---

ब्रह्मविचाराधिकारिणि स्साख्यशास्त्राप्रामाण्यज्ञान मावश्यकमेव, अन्य था तत्राप्रामाण्यज्ञानाभावेन तत्प्रतिपाद्यसत्यत्वाविरोधि प्रपञ्चमिथ्या त्वप्रतिपत्तये तत्प्रतिपादकब्रह्ममीमासाया प्रवृत्त्यसम्भवात् । तत्रच यदि साख्यशास्त्रान्नित्यानित्यविवेकात्प्रागेव वेदविरोधज्ञान स्यात्, त दा तत्राप्रवृत्ते नित्यानित्यविवेकएव न स्यात् । अथतु प्रवृत्तस्य नित्यानित्यविवेकानन्तर तत्र वेदविरोधज्ञान, तदा जातोपि नित्या नित्यविवेको न मुमुक्षाद्वारा ब्रह्मविचारोपयोगीस्यात्, अनाश्वासप्र स्तत्वात् ।

ननु महर्षिप्रणीतस्य साख्यतन्त्रस्य कथ-निरासइत्यत्राह ( न हीति ) वेदविरुद्धत्वाविशेषात् सौगतन्त्रवदेव तन्निराकरणमिति भाव । यद्वा सौगततन्त्रे प्रवृत्त्यभावउक्ते महर्षिप्रणीते साख्यतन्त्रे कथ प्रवृत्त्यभाव इत्यत्राह ( नहीति ) नहिसौगतसमयत्वादप्रवृत्ति रुक्ता, किन्तु - वेदविरोधित्वेना प्रामाण्यादेव, अत प्रयोजकत्वावि शेषात् तस्मिन्निव साङ्ख्येपि प्रवृत्ति र्नस्यादेवेति भाव । ( तेष्वपी ति ) ततश्च मिथ्याध्यवसायार्थे सौगतमतेपि प्रवृत्तिस्स्यादिति भा व. । ( कथचायमर्थइति ) आत्मनित्यत्व मविरुद्ध, अन्यत्तविरुद्ध मिति वेदान्तै रात्मनित्यत्वादिनिर्णयात्मा कथ निश्चीयत इत्यर्थ । त- थाचा विरुद्धाश स्वीकुर्मइति न युक्तमिति भाव ( तथाचेति ) वेदा न्तश्रवणानन्तर अविरोधज्ञाना दविरुद्धसाख्यांशश्रवण, तच्छ्रवणे अ- धिकारसिद्ध्या वेदान्तश्रवण मित्यन्योन्याश्रय इत्यर्थ । ( हितेति ) अयमर्थाऽविरुद्धइत्यधिगच्छामीति शेष ।

दि पित्रादिवचनविस्रम्भादिति चेत् , तर्हि - ततएव नित्यानित्यवस्तुवि वेकोपि सिध्यति, किं साध्यादिकपोलजठकणिकावादेन । अन्ये वमपि का नोहानिरितिचेत् , वेदान्तश्रवणहानिः । तदुपदेशमात्रेणा त्मानित्यत्ववत् समस्तार्थविस्रम्भोपपत्तेः । सर्वस्यापि विवेकस्य आ त्मानात्मविवेकार्थतया तन्सिद्धौ ज्ञातव्यान्तरपरिशेषाभावात् ।

---

ननु यस्य पुरुषस्य हितैषिवचनात् नित्यत्वादावेव विस्रम्भो जातः, अर्थान्तराणां हितैषिणामुपदेशाद्विस्रम्भः, तस्य शास्त्रश्रवणं सेत्स्यति, नचैवसति आत्मनित्यत्वस्य पूर्वमेव ज्ञाततया जिज्ञास्यत्वाभावेन, आरम्भसूत्रविषयत्वाभावात् इह निरूपणं न स्यादितिवाच्यम् , प्रसङ्गादपि तदुपपत्तेरित्यत्राह ( सर्वस्यापीति ) विवेकस्य विवेक साधनस्य ।

ननु – नित्यानित्यवस्तुविवेके जातेपि आत्मैकत्वं न ज्ञातम् , अतएवहि " आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त " इत्युक्तम् , तथाऽऽनन्दात्मकत्वं प्रपंचमिथ्यात्वञ्च नज्ञातमेवेति चेन्न । आत्मैकत्वादिज्ञानस्य सत्यमिथ्याविवेकस्यच श्रवणात् प्रागेव वाच्य त्वात् । तथाहि - आत्मनित्यत्वज्ञानंहि तस्यैवानन्दात्मकस्य प्राप्यता ज्ञाना न्मुमुक्षाहेतुर्भवति , नान्यथा । नह्यतिशयितं नित्यं पुरुषार्थस्य प्राप्यताज्ञानंविना क्षुद्रादनित्याच्च पुरुषार्थान्निवृत्तिः । नापि नित्य स्यानन्दात्मकस्य स्वस्यैव प्राप्यताज्ञानं मुमुक्षाहेतुः, तस्यानादिसिद्ध- त्वाज्ञानेन श्रवणादिप्रवृत्त्यनुपपत्तेः । अतो ब्रह्मस्वरूपस्याखण्डानन्दा- त्मकस्य प्राप्यताज्ञानादेवेतिवाच्यं । ततश्च भिन्नत्वाभेदाऽभावात्स्वेदं एवपारमार्थिकः । त्रिविध्यत्व सर्वज्ञत्वादिभेदो मिथ्यैव । अतो भेदभ्रम निरासेन ब्रह्मैव प्राप्यमिति बुद्ध्यैव मुमुक्षोत्पत्तिरिति त्वनाम ज्ञातव्य मवशिष्यते । एवमात्मैकत्वादिकमपि ज्ञानव्यमेव स्वभिप्रेतं च " आत्मानात्मविवेकार्थतया " इत्यनुगृहीत, ननु नित्यानित्य विवेकार्थतयेति , त्वदभिमत स्वरूपेपि विवेकसिद्ध एवेतिहि सामान्यनि र्देशस्य भावः ।

एतेन यदाहुर्नवीनाः - नतावन्नित्यानित्यविवेकासंभवः, आम
मुष्मा दामहलोक कर्मकार्यंच सर्वं मनित्यं घटादिवत् " त
द्यथेह कर्मचितोलोकः क्षीयत " इति श्रुतेश्चेति न्यायानुगृहीत स्पष्ट
श्रुत्यैव विचारं विनैव कर्मफलस्या नित्यत्वावधारणसंभवात्, आत्मा
च नित्य इत्यवगम्यते । अन्यथा - कस्यापि मते मोक्षाय प्रवृत्त्यसंभ
वात् । तस्यानन्दरूपत्वमपि परमप्रेमास्पदत्वात् " आनन्दाद्ध्येव ख
ल्वि" त्यादि वाक्याच्च निश्चीयते । नचैव - विचारानारम्भप्रसङ्गः,
अन्यस्याप्येवं निश्चेतुं शक्यत्वादिति वाच्यम् । यत्रहि मानान्तरविरो
धो वर्तते, तत्रहि शब्दश्रवणमात्रान्न निश्चेतुं शक्यम् । अद्वैतसमन्वय
श्च तत्तत्पूर्वपक्ष न्याय मानान्तरादिना प्रथम विरुद्धतया प्रतीयत इ
ति न वाक्यमात्रा न्निश्चेतुं शक्यते । ब्रह्मणो नित्यानन्दरूपत्वन्तु न
मानान्तरेण विरुद्धतया प्रतिसन्धीयतइति तच्छब्दादेव निश्चेतुं श
क्यते । नहि परमात्मनस्सुखाभेदे प्रत्यक्षविरोधोऽस्ति । नचानित्यसुख
स्य नित्यात्माभेदविरोधः, अनुकूलतर्काभावेन सुखमात्रे अनित्यत्वाव
धारणायोगात्, सौषुप्तिकसुखावमर्शदर्शनेन जीवसुखस्यापि नित्य
तया तद्विनाशादृष्ट रन्यविषयत्वावधारण सम्भवात् । किंच येन
यदुक्त न्यायेन निश्चितं, तेन इतरदपि न्यायेन निश्चेतव्यमिति न नि
यमः, पुरुषाणाञ्च विचित्रबुद्धितया न्यायानाञ्चालौकिकविषयतयाऽति
सूक्ष्म वा तन्नियमानुपपत्तेः । अन्यथा - धूमाग्न्योर्व्याप्ति स्स्वतएव गृह्यते
ति सर्वापि व्याप्तिरेव ग्राह्येति वैशेषिकादिग्रन्थान्तरारम्भो व्यर्थएव
स्यात्, एतादृशएव पुरुषोऽस्मिन् शास्त्रेऽधिकारी । तदुक्तम् " नात्यन्तम
ज्ञो नो तत्त्वज्ञोऽस्मिन् शास्त्रेऽधिकारवा" निति । एवञ्च ब्रह्मसुखस्य जीवसु
खस्यच नित्यत्व तदितरभोगानाञ्चानित्यत्व सुनिरूपणं, ततो वैरा
ग्य । नचैव - रह्मतिपादवैयर्थ्यं । नहि - तत्र नित्यानित्यनिरूपणपुरे
न वैराग्य । किन्तु - संहतिप्रकारनिरूपणेन पूर्वोत्पन्नस्य दृढीकार कि
यते । वैराग्योत्कर्षेन्द्रियोपरम दार्ढ्येन मुमुक्षाद्वारा श्रवणादिवादर्थंस
भवात् प्राग विरक्तस्य स्वकाम्यफलविरोधि ब्रह्मज्ञानमहत्त्वस्यानुपपत्त्यैव
मेव वक्तव्यत्वात । एव - वैराग्ये शरीरेन्द्रियचेष्टाश मेोऽनुरोध -

तद्विचार्यशास्त्रमाधिकरोतीतिचेत् , तर्हि - तस्यैवाधिकरणसाध्यत्वा दितरवैयर्थ्यं । अदृष्टोपयोगितया धारणादिकमपि चिन्तनीयमितिचेत् , तर्हि तदर्थमेव ग्रन्थस्य ज्ञाननिवर्त्यत्वमपि चिन्तनीयम् ।

ननु - ब्रह्मविचारमात्रस्य कर्तव्यत्व मिह प्रतिज्ञायते, किन्तु " श्रोतव्य " इति विध्युपयोगिन्यायप्रतिपादकत्वा द्विहितविचारस्य कर्तव्यत्व प्रतिज्ञायते, " श्रोतव्य " इत्यस्यच ब्रह्मदर्शनाय विचारः कार्य इति ऽर्थः , ब्रह्मदर्शनोद्देशेन विचारविधानञ्च ब्रह्मदर्शनस्य " निचाय्य तन्मृत्युमुखात्प्रमुच्यते " इत्यादिभि र्वेदान्तवाक्यै र्मीमांसिते मोक्षसाधनत्वे सिद्धएव , तस्मा ज्ज्ञानस्य मोक्षसाधनत्वोपयोगिन्यायोपजीवनेनैव श्रोतव्यइति वाक्यप्रवृत्ते स्तदर्थविचारात्मक मिदमपि सूत्र तदुपजीवनेनैव प्रवृत्तमिति नतब्रह्मविचारकर्तव्यतैतत्सूत्रस्य विषयइति-चेत् , स्यादेव , यदि श्रोतव्यइतिविधिस्स्यात् , नतावदयमपूर्वविधि , शक्तितात्पर्यावधारणरूपस्य तदनुकूलव्यापाररूपस्यच श्रवणस्य " द्रष्टव्य"इति विवक्षितवाक्यार्थज्ञानकारणताया लोकसिद्धत्वात्-असम्भावनाविपरीतभावनाविरहे गृहीतशक्तितात्पर्यस्य वाक्यस्या वधारणजनकत्वमपि लोकसिद्धमेव , तथा सन्निकृष्टविषये दशमस्त्वमसीत्यादौ वाक्यस्यापरोक्षज्ञानजनकत्वमपि लोकसिद्धमेव, तत्प्रत्ययेच परिपन्थिनि जाग्रति कामिपदाभावेच कथं दर्शनफलोद्देशेन विधि", दर्शनस्य विधानासम्भवादिति चेन्न । तत्सम्भवस्य स्थापनात् ।

यत्तु कैश्चिदुक्त - आपातदर्शनमिव कृतिसाध्यत्वेनविधानार्हं प्रतिवाक्य मय मस्यवाक्यस्यार्थ इति सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणमात्र श्रवणम् । तच्चाज्ञानमात्रविरोधि , न तु मननमिव संशयादिविरोधि, मननरूप न्यायावतारांग संशयधर्मिज्ञानरूपत्वात् । मननन्तु अयमेव वाक्यार्थो युक्तो नान्य इति निर्णयहेतु युक्त्यनुसन्धानम् । निरन्तर निध्यान निदिध्यासन । इत्थमेव श्रवणादीनां भेद । विचारादिविधिश्च पूर्वविधि ब्रह्मज्ञान वेदविचारहेतुतायाः अनुन्मीलनात । नहि वेदार्थज्ञानाय वे विचार क

तंव्यइति वचनव्यक्तिः ; ब्रह्मज्ञानस्योद्देश्यत्वात् । नहि - ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्यइति, तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किन्तु - ब्रह्मज्ञानाय वेदविचार कर्तव्यइत्येव वचनव्यक्तिः। यद्यपि ब्रह्मपरवेदविचारएव ब्रह्मविचारः, तथापि न ब्रह्मविचाररूपेण विधानं, किन्तु वेदविचाररूपेण। तथाच श्रुतिः, " तस्मादेनं सर्ववेदानधीत्य विचार्यंच ज्ञातुमिच्छे " दिति। एवञ्च यथा घटादौ वितरभेदे सिद्धेपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरेभ्यो भिद्यत इत्यत्र न सिद्धसाधनता । यथावा स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्राप्तिम्बिकल्पचोदकस्य इतिकर्तव्यताप्राप्तावपि राजसूयं तदप्राप्ति. । तथा वेदविचारत्वोपहिते ब्रह्मज्ञानहेतुतायाः अप्राप्ते रपूर्वविधिता। नहि कर्मकाण्डेन ब्रह्मकाण्डेस्यान्तरकारणादिविरहेण पदवर्णस्वरादिना आपाततोपि ब्रह्मधीरस्ति। यद्वा - निदिध्यासनस्य स्फुटतरभावब्रह्मसाक्षात्कारहेतुता नान्यतः प्राप्तेति सतात्पर्यविधिः । तथा - अज्ञातादौ निदिध्यासनासम्भवेन श्रवणमननयो र्लिङ्गादेव प्राप्तावपि नियतविषयक निदिध्यासनविषय गुणान्यगुणेषु लिङ्गेन तयोरप्राप्ते स्तद्विधिरप्यपूर्वविधिरेव। एवञ्च श्रवणमननयो र्निदिध्यासितव्य गुणाङ्गे दृष्टद्वारेण अन्यत्र तदृष्टद्वारेण निदिध्यासनाङ्गतेति ध्येयमिति।

अथोच्यते · श्रवणेतर द्वयास्ययो नान्तर्भाव, ‘ श्रोतव्य ” इत्यत्र वद्धावक पदाभावात्, शाब्दैव अयमर्थः इत्यादि बहुलप्रयोगात् “ श्रोतव्य ” इति शाब्दज्ञानमेव स्वरसतः प्रतीयते। “ आत्मा श्रोतव्य ” इत्यभिधानात्, आत्मनिच वेदान्तानामेव प्रमाणत्वात् तस्य शाब्दज्ञानस्य वेदान्तजन्यत्व मवगम्यते । तत्र तर्कस्यापि सहकारित्वात् मीमांसितवेदान्तजन्यत्व मवगम्यते । तस्य गुर्वधीनत्व वाक्यान्तराधीनमेव । एवञ्चेति “ श्रोतव्य ’ इति शाब्दज्ञानमात्र मात्मसमभिव्याहारलब्ध वेदान्तजन्य ज्ञानवा, नाविधेय, तस्याप्ययत्नसाध्यत्वासिद्धेः । नापि न्यायोपबृंहितवेदान्तजन्य ज्ञानं। साङ्गवेदाध्ययनेन पातञ्जलोभयभाग पुरुषार्थ तत्साधनस्य जिज्ञासेः

पाठक्रमात् त्रिवर्गे प्रथमश्रावणत्वाच्च कर्मविचारे प्रवृत्तस्य निर्णयेन प्रतिबन्धकजिज्ञासापगमे रागादेव वेदान्तविचारे प्रवृत्ते । किञ्च-ध्यानस्य मोक्षसाधनत्वविधाने ध्येयावधारणस्य ध्यानसाधनत्वस्य लोकसिद्धत्वात् ध्यानार्थिनः स्वतएव विचारे प्रवृत्ते नविचारस्यविधेयता । अतएव श्रवणदृष्टावगत न्यायातिरिक्त साधक बाधक परिहारतद्विरुद्धार्थनिरासात्मकं मननमपि ध्रुवार्थं प्रतिष्ठात्मकत्वात् स्वतएव प्रवृत्ते नविधेयं । एतेन – पराभिमत न्यायमात्रानुसन्धानमननमपि दत्तोत्तरं । ध्यानार्थिनो ध्येयावधारणे लोकतएवप्रवृत्तेः ।

यत्तु विचारविध्यात्मकत्वाभिमतमननविधिसमर्थने, तत्रवेदार्थज्ञानायवेदविचारः कर्त्तव्यइति वचनव्यक्तौ नकश्चिद्दोष । वेदपदेनवेदान्तानां ब्रह्मणएव वेदार्थतया उद्देश्यत्वाविरोधात्, वेदमात्रविवक्षायामपि नैव वचनव्यक्तौ दोष, विधित्वेसिद्धेहि सदोष, तदेवचेदार्थो निश्चितपूर्वं । अनुवादे त्वेव वचनव्यक्तावपि नदोष ।

यश्च - ब्रह्मज्ञानायब्रह्मविचार कर्त्तव्यइतिवचनव्यक्तौदोषउक्त स्वयंदूषितः । भगवत प्राधान्यनाम तद्दर्शनादि फलभूत मात्रचवच्छेदकत्वमेव, नान्यत्, अनिर्वचनात्, तत्र साधनभूतदर्शनाद्यवच्छेदकत्वेऽप्यविरुद्ध, एकस्यैव राज्ञः फलीभूतप्रीत्यवच्छेदकत्वेऽपि तत्साधनसेवावच्छेदकत्व दर्शनात् । नहि राजसेवा राज्ञानवच्छिन्नप्रीतिहेतुः तथा स्वयं तदनवच्छिन्ना प्रीतिहेतुरिति । किञ्च – वेदस्यानिदिध्यासितव्यत्वात् वेदार्थमात्रस्यच निदिध्यासनाङ्गीकारात् ब्रह्मनिदिध्यासनमेवविधेय, तदपिनस्यात् ब्रह्मणोगुणत्वप्रसङ्गात् ।

यत्तु ब्रह्मज्ञानायवेदविचारइति वचनव्यक्तिरिति । तन्न । तत्र वेदपदेनवेदान्तविवक्षायां नविधिसंभवः ब्रह्मजिज्ञासोः स्वात्मतिपादकवेदान्तविचारे स्वतएव प्रवृत्तेः, नचायमधिकारी ब्रह्मणे वेदान्तवेद्यता नजानातीति वाच्यम् । प्रधानादिव्यावृत्तिसन्देहेऽपि अध्ययनकालएव वेदान्तानांब्रह्मपरत्वावगमात् । अन्यथा " आत्मावाश्रोतव्योमन्तव्य" इत्युक्ते पुनस्तआगतविचारस्य वेदान्तविषयता, आत्मनोविचार्यत्वप्रतिपादनात्, तत्र वेदान्तानामिव प्रामाण्यावधारणादि विचारस्य त द्विपयतामतीति'

ननु वेदपदेन वेदमात्रं विवक्ष्यते, अत्र वेदान्तविचारस्य ब्रह्मज्ञानहेतुतायाः प्राप्तत्वेपि नवेदविचारस्य प्राप्तेति चेत्, तत्र यदि कर्मविचारस्य ब्रह्मविचारहेतुतया अप्राप्तिं मन्यसे, तर्हि नब्रह्मविचारे विधि । सत्य, " श्रोतव्य " इति विधिसमर्थनमेव विषाधयिषित नतुब्रह्मविचारविधिसमर्थनमितिचेत्, किं कर्मविचारस्य तादर्थ्यं दृष्ट द्वारा उतादृष्टद्वारा ? नाद्य , अनिर्द्धि., विधिवैयर्थ्याच्च । नद्वितीयः । दृष्टद्वाराभ्युपगमेहि आत्मविचारस्य वेदविषयतास्यात् तद्विचारस्य त त्प्रमाणविषयत्वादिति, अदृष्टद्वारत्वाभ्युपगमे " आत्माश्रोतव्योमन्तव्य " इत्युक्ते कोहि वेदस्यप्रसङ्ग. ।

ननु – वेदस्य आत्मप्रमाणत्वादेव वेदविचारो विधीयते, तदेकदेशद्वारा दृष्टार्थता, अशान्तरे त्वदृष्टार्थतेतिचेत, तथासति वाक्यस्याऽप्रामाण्यात् वाक्यविचारत्वेन सर्ववाक्यविचार विधि प्रसज्येत । अपिचैवमेकदेशेनुवाद एकदेशेविधिरितिस्यात्, पदार्थैकदेशेविध्यन्वयोनुपपन्नश्च । यदिच ब्रह्मविचारस्यापि वेदविचारत्वेन वेदेण ब्रह्मविचारहेतुत्वेना प्राप्तिम्मन्यसे, तत्रकिं वेदान्तवेदत्व नावगत ? अवगतमेव तस्वेदत्व तद्विचारे वेदविचारत्वञ्च, किन्तु वेदविचारत्वावच्छेदेन कारणत्व नावगतमितिचेत, किं सर्वविचाराणा कारणत्व नावगतमिति मन्यसे ? तर्हि सर्वविचारकारणता बोध्या तस्येदान्तविचारे ऽनुवादो दुष्परिहर ।

ननु – वेदविचारत्वस्य कारणतावच्छेदकत्व मनवगतमितिचेत्, तथासति वेदविचारत्वेन कारणत्वबोधन स्यात् । नच श्रोतव्यवाक्यस्य तथाविध सामर्थ्यं पश्याम । नापि 'तस्मादेव" मिति वाक्येनतथाविधि, " सर्ववेदान्तिचाये ' इत्युक्ते नहि सोर्थःप्रतीयते, नतु सर्वेषा विचाराणा तत्तत्प्रतिनियतरूपेण साधनत्वम् ।

ननु – सर्ववेदविचारत्व कारणतावच्छेदकत्वेन बोध्यत इतिचेन्न । अतीतानागतस्य विकरणविचाराणा कारणत्वासम्भवेना योग्यत्वात् । सत्रत्वस्य वेदविशेषणत्वे सर्ववेदसम्बन्धिन एकस्य विचारस्यालाभात् । सर्ववेदसम्बन्धिनो ये विचार। इत्युक्तेतु प्रतिनियतरूपेण तत्तद्वाक्यविचारद्वारा तात्पर्यनिर्णयात् । तत्तद्वाक्यविचाराणा मनुष्ठाय

कारणं बोध्यतइति चेन्न। सर्वावस्य वेदविशेषणतया प्रतिवाक्यं वि
चारलाभेऽपि विचारसमुदायबोधक पदाभावात् । दृष्टान्तश्च विषमः,
पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिपक्षे तादृशोद्देश्यप्रतीतिजनन-
सामर्थ्यं मस्त्येव, इहतु त्वदुद्देश्यप्रतीतिजननसमर्थं किमपि वाक्यं
न दृश्यत इत्युक्तमेव । राजसूयदृष्टान्तश्च विषमः, तथाहि - राजसू
ये बहव इष्टिपशुसोमयागा स्वर्गे फलवन्तः समप्रधानाः, तत्राभिषेचनी
योनाम सोमयागः, तत्सन्निधौ विदेवनादयः समाम्नाताः, ते किं स
र्वस्य राजसूयस्यांग उताभिषेचनीयस्यैवेति ? यदि सन्निधिर्बलीयान्
अभिषेचनीयांगं, अथ प्रकरणं ततो राजसूयस्येति । तत्र सन्निधिविशे
षादभिषेचनीयांगत्वे प्राप्ते - अभिधीयते; प्रकरणाविशेषात् सर्वार्थता।
नन्वभिषेचनीयस्याप्यस्त्येव फलवत्त्वात्प्रकरणं; यद्यप्यस्ति तदप्यन्ये
षामप्यस्तीति तादर्थ्यमपि युक्तं । यदि चपरमविशेषतस्सर्वेषामाकां
क्षायामपि पाठसन्निधिविशेषादभिषेचनीयस्य विशेषत आकांक्षा क-
ल्पयितव्या तादर्थ्यं स्यात् ततश्च विप्रकर्षे, सर्वार्थताऽपि कल्प्याकांक्षा
तस्सुर गम्यते, अभिषेचनीयस्य त्वाकांक्षा कल्पनीयेति । एतेनाप्रयादी
नां धर्मसाधारण्यमपि व्याख्यातमिति । इह सन्निधेः प्रकरणस्य ब
लवत्त्वं न्युत्पादितं, ननु तत्राकारान्तरेणाकांक्षानिवृत्ता वस्या-
कारान्तरेणाकांक्षानुत्पादा । यद्दोष शास्त्रदीपिकायामुक्त - "अभि
नास्त्यभिषेचनीयस्य प्रकरणं, प्राकृतेनैव भावेन कथमाकांक्षापूरणात्।
नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम्, सत्यम्;
प्रातिस्विकरूपेण नास्ति राजसूयात्मना त्वस्त्येव, कथं, श्रुत्यादिविहि
तांगसम्बन्धात्तदंगेन निवृत्ताप्याकांक्षा पुनरुत्थाप्यते, पवित्रादारभ्यक्ष
त्रस्य धृतिपर्यन्तद्विविधेषु प्रायेण 'राजसूयपक्षेनाऽनुजानाति, राजसूयेनेजा
नस्स्वर्गमाप्नुयादि' ति राजसूयपदप्रदर्शनावन्तं देशमनुसृतो राजसूयशब्दः प्र
युक्तानि तन्मध्यपतितानि विदेवनादीनि गृह्णातु" मिति तत्रापि राज
सूयं प्रकरणाभावमाशंक्य सन्दंशन्यायात् समर्थने तात्पर्यम्, नाया
कारान्तरेण धर्मसाधारण्याकारान्तरेणाप्ते साकांक्षाप्रतिपादने ता
त्पर्यम्, तथासति किं मुख्यादिनाकांक्षोपशमितेनाऽऽकारान्तरेणाऽत ,

किंवा स्वारसिकाकांक्षाप्रयोजकत्वेन? नाद्यः आतिदेशिकांगान्वयेन निराकांक्षत्वे प्यौपदेशिकांगान्वयार्थं तेनैवाकारेणाकांक्षोत्थापनस्य बहुशो दर्शनात्। न द्वितीयः मन्त्रश्रवणेननिवृत्ताप्याकांक्षा पुनस्तथा प्यत इत्युक्तिविरोधात् । राजसूयाम्नाता त्ववस्यैवेतितु विदेवनादीनां समुदायान्वयरूपसिद्धान्तसिद्ध्यर्थं समुदायाकांक्षाप्रतिपादनपरम् । किंच वेदान्तविचारांशे लोकत एव प्रवृत्तिसिद्धे स्तदंशे नविधेः प्र- योजकत्वं, किन्तु पूर्वभागविचारांश एवेति , विधे विचारैकदेशप्रयो जकत्वमस्वरसमापद्येत । अनेनैव यद्वेत्यादिकमपि दत्तोत्तरं । किंच किमात्मा श्रोतव्य इत्यत्रात्मशब्दो निदिध्यासितव्य गुणेतरगुणे व्यु- त्पन्नः , येनैवं ब्रवीषि, तथासति निदिध्यासितव्यगुणानां विचार्यता- न स्यात। सामान्यत स्सर्वगुणा विवक्षिताइति चेत ; तर्हि निदिध्या सनस्यापि सर्वगुणविषयत्वादस्यैवात्मशब्दस्य 'निदिध्यासितव्य" इत्य त्राप्यनुषंगणार्थं वैरूप्यायोगात्।

यत्तु- कैश्चिदुक्तं,"द्रष्टव्यश्श्रोतव्य " इत्यादयो दर्शनादीनां विधा यका एव। " आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञात " मित्युप क्रम्य तदुपसंहारे" एतावदरे खल्वमृतत्व " मिति एतावच्छब्देन प्रकृतदर्श नादिचतुष्टय परामृश्य तस्य लौकिक जीवनमिति तत्साधनेत्साध्योपचारेण विशेषणामृतत्व साधनत्वप्रतिपादनात् । दर्शनादयश्च दर्शपूर्णमासा- भ्यामिति द्वन्द्वेनेव " एतावदरे खल्वमृतत्व" मित्येतावच्छब्देन परा मृश्यतुल्यवत्फलसम्बन्ध प्रतिपादनात् समप्रधाना । ननु श्रवणा दीनां पूर्वपूर्वस्य उत्तरोत्तरद्वारैव मोक्षसाधनत्वात् न समप्राधान्य मुपपद्यतइति चेत्; एतावदित्यादिभिश्श्रवणादीनां दर्शनवन्मोक्षसाधन त्वे सिद्धे आधानवदुपकारकत्वेऽपि प्राधान्याविरोधात्। यद्यप्यसा क्षात्कृत स्वर्गादिभावनायाइवा व्यक्तस्वभावब्रह्मनिदिध्यासनस्या- पि तादृशब्रह्मसाक्षात्कारहेतुता न लोकतःप्राप्ता,तथापि तस्यमोक्षोजनयितव्ये दृष्टसन्निहित परमात्म दर्शनद्वारकत्व संभवे अदृष्टद्वार कल्पनस्य अन्याय्यत्वेन दृष्टपरमात्मदर्शनमेव द्वार कल्प्यते । अतो नाकृतनिदि ध्यासनस्यापि परमात्मसाक्षात्कारप्रसंगः, तत्तदधिकार्यनुसारेण नियत तत्तद्गुणवत्तया परमात्मध्यानविध्यपेक्षित तत्तद्गुणत्वावधारणाय फलव

द्यर्थावबोधपर्यन्ताध्ययनविधिना तत्तद्गुणवत्त्वविषयक श्रवणमननाक्षेप सम्भवेपि तदन्यगुणविषयक श्रवणमननाक्षेपासम्भवेन नियतविषयक ध्यानात्मकनिदिध्यासनविषयगुणान्य गुणवत्त्वविषयक श्रवणमननयोरप्यप्राप्ततया "श्रोतव्योमन्तव्य" इतिविधेरप्यपूर्वविधित्वं । तत्रश्रवणस्य मोक्षेजनयितव्ये दृष्ट सन्निहितञ्च मननमेवद्वारं, मननस्यतु मोक्षेजनयितव्ये ध्येयान्यगुणांशे अदृष्ट ध्येयगुणांशेतु ध्यानोपकारकत्वमपीति ।

केचित्तु- श्रवणमननयोर्नविधि, अर्थावबोधपर्यन्ताध्ययन विधितएवतयोः प्राप्तेः, अतस्तयोरनुवादः, निदिध्यासनस्यतु मोक्षेजनयितव्ये दृष्ट दर्शनं द्वार, दर्शनेत्वदृष्ट द्वार । नचैव मोक्ष प्रत्येयादृष्टं द्वारमस्त्वितिवाच्य । मोक्षंप्रति द्वारकल्पनादशाया मदृष्टस्यानुपस्थितत्वादिति।

अत्रोच्यते यदुक्त "एतावदरेखल्वमृतत्व" मित्यादिना चतुर्णां मोक्षसाधनत्वेन विधानमिति । तन्न । प्रयोजकत्वमात्रेण तत्र सामानाधिकरण्योपपत्तेः । लांगलं जीवनमितिवत् । नहि लांगलं साक्षाज्जीवनहेतुः, अपितु कर्षणादिव्यापारव्यवधानेनैव । निदिध्यासने मोक्षार्थं विहिते लोकसिद्धतत्साधनभावयोः श्रवणमननयोर्लोकतएव प्रवृत्त्युपपत्तौ तथाप्यदृष्टमादाय गुरुभूतविधिव्यापार कल्पनानुपपत्तेः ।

यदुक्त निदिध्यासनस्य दृष्टपरमात्म दर्शनद्वारकत्व कल्प्यत इति । तन्न । 'स्तुतिलभ्येसर्वग्रन्थीनां विप्रमोक्षः" "तस्मिन्दृष्टेपरावरे" "भिद्यते हृदयग्रन्थि"रित्युभयत्रापि तुल्यवन्मोक्षसाधनत्व प्रतिपादनात्। दृष्टद्वारस्य सम्भवे तदग्राह्यमितिचेन्न। त्वयैव तदसंभवस्योक्तत्वात् । यदि निदिध्यासनस्या एकतत्स्वभाव ब्रह्मज्ञानाकारहेतुत्वान्यतः प्राप्तेतिब्रवीषि । तज्जन्यस्यादृष्टस्यापि तत्स्वरूप दृष्टमितिचेन्न । यत्तज्जन्य तत्फलजननयोग्यञ्च दृश्यते तत्र क्षेत्रज्ञव्यापारवृत्ति, दृष्टेन अवहननस्य तुषविमोकसाधनत्वं, तुषविमोकस्यपर्यायेण पुरोडाशादिषु । अन्यत्र नैतन्नयाय प्रवृत्तिसम्भव । अदृष्टकल्पना भीत्या दृष्ट द्वार कल्पयत स्तदर्थं पुन रदृष्टगुरुकल्पना पातात् । दृष्टद्वार कल्पनादशायां नतदुपस्थितिरितिचेन्न । दृष्टद्वारत्वेन कल्प्यते, सम्प्रदर्पणा, तथाकल्पनायाञ्च तदन्यादृष्टोपस्थितिरनिवार्या।

तस्माज्ज्ञानभक्तिनयपक्षात्मक मेकमेवज्ञानं मोक्षसाधन मित्यनुगृह्णन्ति वेदान्तरहस्यवेदिनः । अस्तुतर्हि नियमविधिः । यद्यप्यात्माविचारितवेदान्तैरेव ज्ञातव्य इति वेदान्तनियमोनसंभवति । आत्मनि वेदान्तातिरिक्त प्रमाणाप्रसक्ते र्व्यावर्त्याभावात् । नच लौकिकतुपनिषृत्ता वुपायांतरवदलौकिकात्मज्ञाने मनःप्रमाण प्रसक्तमितिवाच्यं । सिद्धान्ते मनसोऽप्रमाणत्वात् , उपादानतया तस्यवाक्येना प्यपेक्षित त्वात् । नाप्यनुमानं, "नैषातर्केणे" ति निषेधशास्त्रादेव तत्सिद्धेः । श्रुतिसमान विषयस्य तस्य "मन्तव्य" इति श्रुत्यैव सहायत्वेनांगीकारात ; भिन्नविषयत्वतु विवक्षित श्रुत्यर्थे अप्रसक्तत्वे नंनिवर्त्यं वं । नापि पुराणवाक्यं व्यावर्त्यं ; " इतिहास पुराणाभ्यां वेदं समुपबृंहये " दिति तस्यापि वेदार्थस्थानोपाय त्वोपगमात् । नाप्यात्मविषय प्राकृतगाथा व्यावर्त्या , तस्येज्ञिन वाक्यान्मुमुक्षूणामधि वेदाधिकारिणां तस्या निषिद्धत्वात । नापि वेदान्तानां विचारितैरात्माज्ञातव्य इति विचारनियमो प्युपपद्यते । तत्रापि व्यावर्त्याभावात् । नच-गुरुमुखं श्रवणं नियम्यतइति वाच्यं । "तद्विज्ञानार्थं"मिति ज्ञानार्थं गुरूपसदनविधिनैव स्वतन्त्रश्रवणस्य व्यावृत्तत्वात् , अन्यथा तद्विधेरदृष्टार्थतापत्तेः । नच्या विचारित वेदान्तवाक्यं व्यावर्त्यम् । तन्मात्रा न्निर्णयानिष्पत्तेः । नापि मुमुक्षूणां मोक्षसाधनज्ञानायात्मैव श्रोतव्य इत्यात्मा नियम्यते, आत्मनोऽनिश्चेयत्वात्, अनात्मविचारस्य मुमुक्षुजिज्ञासितात्म ज्ञानानुपायत्वेनस्वतएव व्यावृत्तता । । तथापि मुमुक्षूणा मद्वैतात्मविषय वेदान्तविचारो नियम्यते, तदात्मप्रकरणस्य " इदंसर्वं यदयमात्मा " " आत्मनिविज्ञाते " सर्वमिदं विज्ञात " मित्येवमादि तत्प्रकरणस्थ वाक्यपर्यालोचनया अ-तात्मपरत्वात्, भिन्नात्मविषयवाक्यश्रवणं व्यावर्त्यते, ततो दुरितसंभवज्ञानासंभवात् । नन्वेवन्मुमुक्षु. प्वतो निवृत्तइति वाच्यं; आपातप्रतीतिरशास्त्रं द्वासुपर्णे त्यादि वाक्यात् " जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमिति वीतशोक " इति भेदज्ञाना च्छोकनिवृत्ति प्रतिपादनात्

मुक्तिसाधनज्ञानार्थिनो विचारविध्यभावनियमेन ततो निवृत्त्यसंभवात् । नच आपातप्रतीतिदशायां " उदरमन्तरंकुरुते " इत्यादिवाक्यात् भेदज्ञानस्यानर्थहेतुत्व प्रतिपत्तेर्मुमुक्षो स्तत्र प्रवृत्तिरिति वाच्यं, " तस्मादेकाकी बिभेती " त्यभेदज्ञानेपि तद्दशायां भयप्रतिपत्तेः । " नान्योतोस्तिद्रष्टे " तिभेदनिषेधश्च आत्मभेदविषय ईश्वभेदनिषेधविषयो वेति न तदा निश्चेतुं शक्यते । तथाच यथा " व्रीहीनवहन्ती" त्यादौ दृष्टपुरोडाशहेतुभूत तण्डुलनिष्पत्तिमात्रस्य साधनान्तरसाध्यत्वे प्यपूर्वजनकत्वांशे। वहननियम्यते, एवमत्राप्यात्मज्ञानमात्रस्य सकलसाधनान्तरसाध्यत्वयोग्यतायामपि अविद्यानिवृत्तिसमर्था द्वैतात्मज्ञानसाधनीभूत वेदान्तश्रवणं पक्षे अप्राप्तं विधीयते, अर्थाच्च प्राग्विधिप्रवृत्ते र्नखविदलनादिव क्रमगृहीत साधनान्तरव्यावृत्तिः । ततश्च भेदप्रवणचित्त स्तच्छास्त्रेपि कदाचित्प्रवर्तेत, तन्माभूदिति दयार्द्रश्रुतिराह " आत्मावा अरे द्रष्टव्य श्रोतव्योमन्तव्य "इति। नच वस्तुतोयत्साधनं तदेवव्यावर्त्यमिति नियमः, किंतु यद्व्यावृत्ति बोधनं विना नियम्यमानस्य पाक्षिक्यप्राप्तिर्ननिवर्तयितुं शक्यते, तत्तदत्र निवर्त्यं, लौकिकतुषविमोकेपि नखविदलनादे र्वस्तुतस्साधनत्वाभावात्, तज्जातीयसाधनत्वात्तु प्रकृतेपि, शरीरातिरिक्तात्मज्ञानमात्र भेदशास्त्रस्यापि साधनत्वात्, स्वातन्त्र्येण पुराणादौ प्रवृत्तिर्वा निवर्त्येति केचिदिति ।

अत्राभिधीयते, आपातप्रतिपन्नवेदार्थ प्रति न नियमः, आपातप्रतीतिदशायां कुत्रापि प्रवृत्त्यसम्भवात् । नच कृष्यादाविव प्रवृत्तिः । " मृत्युस्समृत्युमाप्नोती " त्यादिना नानर्थश्रवणात् । नच - कृष्यादावनर्थ प्रतीतिः, किंतु फलाभावशंकामात्रमेव । नच गृहीतभेदतात्पर्यकवेदान्त प्रति नियम, तेनास्यापि भेदतात्पर्यस्यैव ग्रहेणतत्प्रत्ययस्य वाक्यस्य त्वदुक्तार्थबोधकत्वासिद्धेः । नच - गृहीताभेदतात्पर्यकवेदान्तंप्रति, विचारादेव तात्पर्यावधारणेन निर्णविचारम्प्रति नियमविधिर्निरपाख्यान, तर्हिदा नानन्तरिवन्तरान्तरया अत्रोपसिद्धस्य।

यदुक्तं भ्रमगृहीतसाधनत्वव्यावृत्त्यर्थमेव नियम इति भ्रमस्यैवं तथापि सति नियमेन विना भ्रमनिवृत्तिर्न स्यात् तदाहि नियमस्य पातान्न नियमेन विना साधनत्वभ्रमो विद्वळनादेर्निवर्तते, इह तु नियमाभावेपि न्यायानुगृहीतैर्ज्ञानस्य मोक्षसाधनताप्रतिपादकवाक्यैः ज्ञानस्याद्वैतविषयस्यैव मोक्षसाधनताप्रतिपत्तौ कथं द्वैतज्ञानस्य मोक्षसाधनत्वभ्रमः। वस्तुतस्तु यदि भ्रमगृहीतसाधनत्वव्यावृत्त्यर्थो नियमः स्यात्, तदा ' उरुप्रथस्वे ' ति मन्त्रस्य प्रथनप्रकाशनत्वलिंगेन पुरोडाशप्रथने विनियोगे मन्त्रान्तरेपि प्रथनप्रकाशनस्य लक्षणलिंगभ्रमात् तस्यापि तत्रैव विनियोगभ्रमे शतुर्थोपार्थ प्रकाशन लक्षण कार्यस्य एकेनैव मन्त्रेण सिद्धौ मन्त्रद्वय वैकल्पिकमेवेति युक्तौ सत्यां " उरुप्रथस्वेति पुरोडाशं प्रथयति ' ति तदर्पणाश्च मन्त्रान्तर निवृत्त्यर्थं नियमविधिर्नेस्यात्, तानुवादः। किञ्च भ्रमगृहीतसाधनत्वव्यावृत्त्यर्थं नियमवदन्यथापि पक्षान्तराणि निराकर्थे। पूर्वभागस्यापि " सर्वे वेदा यत्पदमामनन्ति " त्यादिना ब्रह्मणि प्रामाण्यभ्रमात् वेदान्तनियमो युज्यतएव। ' नैषा तर्केणे ' ति श्रुत्यनुसन्धाने अनुमानस्यापि निवर्त्यत्व युज्यतएव। ' नान्ध्ये छितवा " इत्यादिवाक्यस्य तदर्थस्फुरणदशायां प्राकृतगाथायाप्यापातेपि न हानिः। किञ्च निषिद्धानुष्ठानेन दुरितापूर्वोत्पत्तावर्पीहत्यामस्याप्यनिवारणान्नियमेन विना ननिवृत्ति। किञ्च ' नम्लेच्छितवा " इति गार्थो च्चारणस्य निषेधेपि तद्विचारस्य न निषेध। तथा गुरूपसदनस्याप्यर्थात्वभ्रमतो गुरुमुखश्रवणनियमेयाका हानि। तथा विरोधाप्रतिदशाया विचारितवाक्यादपि निर्णयोत्पत्तेः रविचारितवेदान्तव्यावृत्तौ का हानि वा? तस्मात्त्वदुक्त पक्षत्रयशंकितुमप्यनर्ह। यद्यपि त्वद्दूषिताः पक्षा अनर्हाः। तेप्यपरोक्षसाधनान्तरस्याव्यावर्त्यतयैव निरस्ता।

एतदुक्तं भवति, किमुत्पन्नमप्यवधारणनियमादृष्टाभावादनिवर्तकं? उत नियमादृष्टाभावात् अवधारणमेव नोत्पद्यते? आद्ये मोक्षस्यादृष्टसाध्यत्वप्रसंग। द्वितीयेत्वनुभवविरोधः। इतरतरविश्वस्तोपदेशादिनाप्यवधार्यं जायतएव। अपरोक्षार्थविषयत्वात् त्वद्रीत्यापरोक्षमेवेति। एवञ्च यदि तृणारण्यादिरूपाननुगतकारणे ष्वनुगता शक्ति कारणतावच्छेदकत

परिशेषेच निर्गुणत्वव्याघाताच्च । स्वाभिमतपूजार्थप्रवचनादिकौतुकस्यैव तल्लक्षणमिति चेन्, हन्तैवं साधु शमदमादिसाधनसम्पत्सम्पादिता ! कामक्रोधादेरेव वेदान्तश्रवणनिमित्ततोपपादनात् । स्याच्चायमाशयः श्रवणेच नित्यानित्यवस्तुविवेकादे कोपयोग ।

अथ वेदान्तमीमांसाश्रवणस्य तस्य विमर्शइति, तदपि न, अर्थनिश्चयसिद्ध्यर्थत्वाद्विमर्शस्य । निश्चयो यद्युपदेशात् सिध्यति, किं वृथा प्रयासेन । अन्यथा प्रदक्षिणनमस्कारादिवददृष्टार्थमेव स्यान् मीमांसाश्रवणस्य । नच मीमांसाश्रवणस्य वेदनमिति प्रागेव समाधानम् । अस्तुच वैराग्यम्, तथापि नित्यानित्यवस्तुविवेकस्यापि इतिकर्तव्यताभूतमीमांसाधीनस्य विधिना स्वीकारात् तत्पादितस्यच तस्य अविरोधलक्षणमध्यायात् न पूर्वत्वसिद्धि ।

वेदान्तस्य पूर्ववृत्तत्वसंभवः । तदङ्गत्वाद्ब्रह्मणि ज्ञातव्याकारान्तरमिष्यत इत्यत आह ( परिशेषेचेति ) तर्हि जगत्कारणत्वादिकमेव ज्ञातव्यत्वात, तथाच तेन तदुपयोगिसार्वज्ञ्यादिभिश्च सविशेषत्वान्निर्विशेषत्वभङ्ग इत्यर्थः । मिथ्याभूतकारणत्वादिपरत्वेच साधु तत्वावेदकत्वं मोक्षार्थंच वेदान्तशास्त्रस्यो पपादितं स्यात । ( प्रवचनादीति ) आदिशब्देन जल्पादि कथा प्रवर्तनं गृह्यते । ( अन्यथेति ) यद्यर्थज्ञानवत्त्वं अध्ययनविधिवित तदेत्यर्थ । अर्थज्ञानवत्त्व अपि वैधत्वे नियमविधित्वभङ्गा दपन्निद्धातोर्पातिभाव । फलस्यासिद्धत्वात् नतदर्थश्रवण मित्युक्त, इदानीं रागप्राप्तत्वात् विधिसम्भवइति पूर्वोक्तमाशङ्क्यति ( नचेति ) ( तथापीति ) त्रिविधमीमांसा या इतिकर्तव्यताविनान्तरगत्वा तज्जन्यमेव नित्यानित्यविवेक वि चाराधिकारतया स्वीकरोति नतूपदेशसाध्य, तादृशमीमांसाधीनश्चनि त्यानित्यविवेको द्वितीयाध्यायसाध्यइति नतस्य पूर्वत्वमित्यर्थ । तर्हि स्मार्तेवाभयादौपदेशिको नित्यत्वादिविवेकाधिकारतया स्वीक्रियतः इतिचेन्न उपदेशनस्य फलसिद्ध्या तदसंभवस्याप्युक्तत्वात्, सूत्रवहिष्टविचारोपि नित्यानित्यविवेकस्याधिकारत्वेन द्वितीयाध्याय तन्निरूप

मेवेति परिशेषा कर्मविचारस्य पूर्वत्वसिद्धिः । यदातु कर्मपूर्व
विचारेण तदा "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणोनिर्वेदमाया" इ
त्य दिश्रुतिसिद्धप्रकारेण नब्रह्मबुभुत्सासम्भवतीत्यतोपि क्रमनियमइति क
र्मविचारस्य पूर्ववृत्तत्वमवश्याश्रयणीयम् । एवं रागप्रावण्यपक्षेपि क्र
मसिद्धिः, रागोऽपि हि साङ्गाधीतसशिरस्कवेदस्य यथाप्रतीत स
र्ववेदभागार्थस्य कर्मब्रह्मभागयोरविशेषेण सातिशयनिरतिशय समस्त
पुरुषार्थप्रतीतौ युगपत्प्राप्त्यविशेषेण प्रवर्तते क्रममपेक्षमाण स्वा
ध्यायाना मेवं प्रायशः कर्मोपक्रमत्वात् साक्षात्सङ्गत्या मुख्यक्र
मानुरोधेन स्वाध्यायेतिकर्तव्यताभूतमीमांसाक्रम प्रवृत्तान "का
ङ्क्षन्त कर्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे लोके सिद्धिर्भ
वति कर्मजा" इति न्यायेन त्रिवर्गप्रधानप्रावण्यस्य मन्दस्य चापे
क्षमाणः; "यज्ञेन दानेने"त्यादिना यज्ञाद्यङ्गकोपासनविधौ यज्ञादि
ष्वन्तेषु यज्ञादिकर्मस्वेव पदार्थभूतयज्ञादिस्वरूपाभिगम साकाङ्क्ष
या पूर्वमेव कर्मविचारापेक्षां पश्यन् ब्रह्मविचाराङ्गभूत कर्मसङ्ग्रहार्थ
तया ब्रह्मदृष्टिरूपतयापि शारीरकेनुष्यसङ्गत्यो इति विज्ञातेथ वा

---

यकर्तव्यतायां बुभुत्सोत्थापकत्वेनोपजीव्यत्वात् कर्मविचारस्य पूर्ववृ
त्तत्वमित्याह ( यदात्विति ) प्रसंगादाह ( रागेति ) ( मुख्यसङ्गत-
स्येति ) अनेनप्रासङ्गिकापेक्षितत्वमात्रेण धर्मस्य पूर्ववृत्तत्वनियमोनयु
क्तः, साक्षात्सङ्गतस्य तत्सापेक्षत्वेहि तथा स्यात्, अथशब्दे प्रति
ज्ञातार्थापेक्षया पूर्ववृत्तत्व हि प्रतीयते, नच प्रसंगसङ्गतोर्थः प्रतिज्ञा
विषयइति निरस्तम् । प्राप्यत्वेन प्रापकत्वेनच प्रतिपन्नस्य ब्रह्मणस्त
थैव जिज्ञास्यत्वात्, तेनैव रूपेण विषयतया उपास्यस्य तदुपयुक्ता
नाञ्च प्रापकप्रतिज्ञान्तर्भावेण उपासनार्थकर्मधर्मज्ञवर्थोदेशानामपि सा
क्षात्सङ्गतत्वात् । नचेद कर्मनिरूपणमपि शङ्कनीय । कृतत्वप्रस
ङ्गात् । ननु तर्हि सत्त्वसम्बन्धचन्द्राद्युद्गीथादेः पूर्वकाण्डएव निरूपणस्या
दित्यत्राह ( ब्रह्मदृष्टीति ) नब्रह्मज्ञानविना तन्निरूपणं नसम्भवतीतिभा

प्रागुक्तनयेनक्रमश्च । गुणप्रधानभाववैपरीत्यमेव तु भवता साधितं । ब्रह्मविदस्तु तच्चिन्तयाक्वोपयोगस्त्वन्मते । कर्मसिद्ध्यर्थं तदुपदेशउपयोगइतिचेत्तर्हि कर्मापि चिन्तयेदविशेषात् । अथ विविदिषार्थकर्मसाद्गुण्यसिद्ध्यर्थमिति पश्यसि, तत्राप्यनुपयोग एव - विविदिषाया जातायामेव श्रवणे प्रवृत्ते, तत्रापि पुनस्तदुपदेशार्थत्वायोगात् । कर्मणाञ्च वेदनाङ्गत्वस्य प्रागेव स्थापितत्वात् न विविदिषाङ्गकर्मसिद्धि । ब्रह्मविचारस्य पृथक्करणमेव प्रयोजनमिति चेन्न, तस्यैकनिरूपणासाध्यत्वात्, तथाचात्र चिन्तनस्यादर्शनात् प्रकारा

---

र्थत्वात् कर्मब्रह्मविचारयोरेकशास्त्र्यं सिद्ध्यतीत्यर्थः । नैतावदेव, अनिष्टान्तरमपि तव सिद्ध्यतीत्याह (प्रागिति) ऐकशास्त्र्येसति क्रमाकाङ्क्षायां मुख्यक्रमानुरोधादिन्यायेन क्रमोऽपि सिद्ध्येदित्यर्थः । बाधकान्तरमप्याह (गुणप्रधानेति) ब्रह्मोपसर्जनतया हीतरेषां निरूपणमुचितं, त्वया तु ब्रह्मण एव इतरोपसर्जनतया निरूपणमुक्तमित्यर्थः । त्वदिष्टं किमपि न साधितमित्यवधारणार्थं । एवमनिष्टप्रसङ्गात्त्वचैव मुपयोगो वक्तुं न शक्यत इति स्थितम् । एवमुपयोगमात्रेण समन्वयमङ्गीकृत्योक्त, इदानीं मिथोपयोगाभावे ऽतदधिकारिणस्तत्र प्रवृत्त्यसम्भवादिह तन्निरूपणं नस्यादित्याह (ब्रह्मविदस्त्विति) (कर्मापीति) ब्रह्मविदिति शेषः । यदि च मोक्षसाधनश्रवणादिव्यासक्तस्य मुमुक्षोस्तदसम्भव इति मन्यसे, तर्हि ब्रह्मादिचिन्तायामपि तुल्यमिति भावः । ननु - स्वस्य विविदिषाया जातायामपि परस्य विविदिषोत्पादनाय तदर्थकर्मसाद्गुण्यार्थं तत्प्रत्युपदेशाय तद्विधादिचिन्तनमित्यत्राह ('तत्रापीति) कर्मणोऽपि विचारप्रसङ्गादित्यर्थः । (न विविदिषाङ्गकर्मसिद्धिरिति) विद्याङ्गकर्मसमुच्चयपक्षस्तु त्वया नेष्यत इतिभावः । एवमिहोपयोगे वाच्ये साक्षात्सङ्गतिरेवेति स्थितं । नचैव प्रसङ्गसङ्गत्युच्छेदः । कर्मविचाराधिकार्युपयोगितयैव शेषलक्षणे सङ्गतस्याप्यौपादानिकदोषस्य प्रसक्तस्य अपुनरुक्त्यर्थं चिन्तनात् ।

न्तरेऽत्यनु बहुशोऽत्र तासां चिन्तनात् । एवं कर्मविनिरूपणे प्र क्षवेदनापेक्षणात् प्रह्मनिरूपणेच कर्मवेदनं सापेक्षत्वात् अन्यत रविदो ऽशक्यनिरूपणासूद्गीथविद्यासुभयविदयन चिन्तनावकाशइति फलित । शारीरकेच ब्रह्मस्वरूपनिरूपणानन्तरमेव तच्चिन्तनं सूत्रितं । तस्मादेव साक्षात्संगतस्य तच्चिन्तनस्य प्रधानोपयोगापेक्षाया अ गभूतकर्मसमृद्धिद्वारा विनो वेदनस्य शीघ्रनिष्पादनं नाम महानुप योग । तदप्याह " तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्यो त्पादकानीति तत्साद्गुण्यापादकान्येतानि सुतरामिहैव संगतानी " ति । किंच " अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्या र्थस्य संसिद्धौ कोविद्वान्यत्नमाचरेत् ॥ " इतिन्यायात्कर्ममात्रेण चेद मृतत्वलभ्येत क पुन कर्मांगकात्कर्मसमुच्चिताद्वा ज्ञानादमृतत्वं लि प्सेतेत्येतदप्युक्तं प्रागेव । अतोऽपि कर्मण्येव प्राक्प्रवृत्ति - कर्मणितु निरूपिते न्यायपरिश्रान्तचेतसस्तयोत्तरोत्तरातिशयित कर्मविधानादि-

---

हेत्वन्तरेणापि साक्षात्संगतिं साधयति ( एवमिति ) विचारद्वयस्यापे क्षतया पृथङ्निरूपणीयस्यास्य ब्रह्मचिन्ताया निरूपणं तत्रैव साक्षात्संग ति द्योतयतीत्यर्थः । ननु प्रसंगादपि तत्र तन्निरूपणोपपत्ते कथ साक्षात्संगतिरित्याशंकानिरासाय ब्रह्मस्वरूपनिरूपणानन्तरमेवेत्यु- क्तम् । यदिह्युद्गीथादिचिन्ताप्रसंगतस्स्या तदा ब्रह्मविद्यानिरूपणान न्तरं स्यात् , सातु ब्रह्मविद्याभ्य प्रागेव ब्रह्मनिरूपणानन्तरं क्रियत इत्यर्थः । साक्षात्संगतौवा कथमिहोपयोग इत्यत्राह ( प्रधानेति ) नित्य फलेच्छायामपि कर्मणएव पूर्ववृत्तत्वमित्याह ( किंचेति ) ( संसिद्धा विति ) अयत्नेनेति शेष. ( कर्ममात्रेणेति ) आपातप्रतीतिदशायां स्व ग्राप्यक्षयफलत्वप्रतीतेः स्वर्गेभ्य वामेभ्यइत्यादिना सर्वान्तिर्भावेण मो क्षफलत्वप्रतीतेश्चेति भाव । ( न्यायपरिश्रान्तेति ) सम्यगभ्यस्तन्या यतयेत्यर्थः ( उत्तरोत्तरेति ) प्रयत्नतारतम्यात्फलतारतम्यसिद्धि , त था स्वरूपत. फलतोवा वाच्यम् , तथाऽऽवृत्तिविधानादपि तात्सिद्धि

भि कर्मणामल्पास्थिरफलत्वमवसाय तत्प्रसादकानिच "परीक्ष्य लोका" नित्यादीनिवाक्यानि प्रागापातप्रतीजनकान्यपि निरूपित सन्यायानि यथाश्रुतार्थानि सामान्यतो निश्चित्यानन्तस्थिरफलस्य केवलक र्मभिरलभ्यतया मत्वा प्राचीन कर्मोपस्कृतज्ञानसाध्यानन्तस्थिरफ लापातप्रतीत्या प्रतिबन्धकरहितया सञ्जातमुमुक्षातिशय शारीरक शास्त्रमारभेतेति स्थितमेतत्। कथञ्च नित्यानित्यवस्तुविवेकसिद्धये शा स्त्रान्तरावकाश, प्रागुपनयनात् कामचारवादभक्षितया यथोपल म्भकुक्षिम्भरेर्बालस्य शास्त्रान्तरान्तरावकाशोपि नास्ति, उपनीतस्य

---

रित्यर्थ। (निरूपितेति) अनित्यत्वप्रतिपादकवाक्यस्य निरूपणसन्या यित्वादशान्तराण्यपि यथाश्रुतार्थएव न्यायसन्यादीनीति सामान्यतो निश्चित्येत्यर्थ। अत्र निश्चयशब्देन समानकोटिकसंशयविरोधित्व वि वक्षितम्। एतन्निश्चयानन्तर मुक्तकोटिकएव संशयो भवति नतु समानकोटिकइति भाव। तेन नापातप्रतीत्येति वक्ष्यमाणविरोध। (प्रतिबन्धकरहितयेति) उक्तरीत्या प्रथमभाविनी कर्मजिज्ञासानिवृत्ते ति भाव। (मुमुक्षातिशयइति) पूर्वोक्तसामान्यनिश्चयो तिशयहे तु। एव नित्यानित्यवस्तुविवेकस्यौपदेशिकत्वे कृत्स्नस्यौपदेशिकत्व सम्भवाद्विचारवैयर्थ्यमुक्त्वा विधिवत्त्वा द्विचारमाश्रित्य विषयीका रेपि कर्मणएव पूर्ववृत्तत्व स्यादित्युक्तमसङ्ग्रहागमप्राप्तिपक्षेपि क्रमनि यम उपपादित। एव मौपदेशिकनित्यानित्यविवेकपक्षो दूषित। शास्त्रजन्यनित्यानित्य विवेकपक्षे दोषान्तरमाह (कथचेति) (काम चारेति) ततश्च यथेच्छाचारिणो ह्यनुपनीतस्य अलौकिकपुरुषार्थेच्छा विरहेण तदर्थं प्रवृत्तिर्न सम्भवति। नच - शास्त्रान्तरप्रवृत्ते, काम चारान्तर्भाव। बहुप्रयाससाध्यत्वात्। नच - स्वार्थवाद्यर्थं प्रवृत्तिसभव, बाल्यमति तस्य पुरुषार्थत्वासिद्धे, तादृशपुरुषार्थोपि तस्य प्रसिद्धका मचारादावेव, एतदभिप्रेत्यैव तस्य भोजनैकप्रयोजनकत्वमुक्त, (य थोपलम्भकुक्षिम्भरेरिति) ननु कर्मविचारानन्तर अध्यापकाभावादिना

वेदाध्ययने नियुक्तत्वात् अधीतवेदस्यापि तदर्थविचारे विधिना रा गेणवा प्रेरितत्वात् तयोश्च जिज्ञासितलक्षणीश्रवणमन्तरेणानुपरमात्। अक्रमप्रवृत्तास्तु नशास्त्राधिकारिणइति स्वीकुर्म । अन्यथेदानीमेव अकृतव्रतस्य अनधिगतागमस्य लिखितपठितस्वाध्यायस्यैव मीमांसा धिकारप्रसङ्गात् सौगतादीनामप्य स्वमतदूषणार्थिना ब्रह्मविचाराधि कारप्रसङ्गाच्च । अतो हेत्वन्तरा न्नित्यानित्यवस्तुविवेकोय माशामो दकायते। तेनान्यस्मात्तदसिद्धौ न तद्वतो ब्रह्मविचार, तेनैव तद्व त्तेतु मिथस्समाश्रय पुनरप्यजति । एतदभिप्रायेण भाष्यम् "नित्यानि त्यवस्तुविवेकादयश्च मीमांसामन्तरेण न सम्पत्स्यन्त " इत्या दि। एतेनैव द्वितीयोपि कल्पो दूषितइति भाष्यकाराभिप्राय । तथाहि यदि नित्यानित्यौ पदार्थौ श्रवणेन निश्चित्य तद्वते हेयो पादेयत्वे निश्चियेते तदा पूर्वोक्तमेवोत्तरम्, चक्रकापत्ते। अथ नित्यमस्तिचेत्तदुपादेय अनित्यचेदनुपादेयमित्येव मात्रविवेक, तद पि मन्दम्, अपुरुषार्थत्वे नित्यस्याप्यनुपादेयत्वात्, अनित्यस्यापि-

---

ब्रह्मविचारप्रवृत्तिप्रतिबन्धे ख्यात्यादर्थं सांख्यादिशास्त्रे प्रवृत्तिर्युज्यत एवेत्यत्राह (अक्रमप्रवृत्तास्त्विति) अध्ययनविधिप्रयुक्त क्रमातिक्रमे- ण प्रवृत्तानित्यर्थ । (मीमांसाधिकारप्रसङ्गादिति) अतश्च "अथातोधर्म जिज्ञासे" त्यत्र वेदाध्ययनानन्तर्यं मथशब्दार्थो न स्यादिति भावः। एव "अथातश्शेषलक्षण" मित्यादावपि पूर्वपूर्वाध्यायार्थवृत्तता अथ शब्दा- र्थो न स्यात। (सौगतेति) तथाच साधनचतुष्टयस्यापि पूर्ववृत्तत्व तव नसम्भवतीति भाव । हेयोपादेयत्वविवेकइति द्वितीयकल्प दूषय ति (एतेनेति) (पूर्वोक्तमिति) अन्योन्याश्रयइत्यर्थ.। चक्रव मपिहि तद्गर्भमेव, श्रवणेन नित्यानित्यनिश्चय तेन हेयोपादेयताज्ञान मनेनश्र वणमिति चक्रक मित्यर्थ। (अपुरुषार्थत्वइति) पुरुषार्थशब्दस्सुखादि पर., उपादेयत्वशब्दश्चेच्छाविषयत्वपर, विवेकिना मनित्यमनुपादेय

ननसा तच्छते । नच - तद्दर्शनं श्रवणफलमिति दर्शनसाधनभूतश्र वणाङ्गत्वं शमादीनामिति वक्तुं युक्तं, श्रुतहानाश्रुतकल्पनादि दोषप्रसङ्गात् । अविधेयज्ञानत्वात् शब्दजन्यप्रत्यक्षत्वाच्च निरस्तत्वात् । एवञ्च शमादीनां ब्रह्मविद्याङ्गतयोपादेयत्वं साधनलक्षणे शमदमाधिकरणेऽङ्गीकर्तव्यम् । अतएते शमादयः कथं शारीरकश्रवणापूर्वमुपात्ताः स्युः । अत्रायं संग्रहः — शान्त्यादयो विद्याङ्गत्वे विद्याङ्गत्वेन संयुताः । शास्त्रारम्भे कथं तेषां उपयोगस्त्वयोच्यते ॥ * ॥ इदं चोक्तं भाष्ये- " नित्यानित्यवस्तुविवेकादयश्चे " त्यादिशब्देन सम्प्रत्ययात् । तथा शमादीनां साधनत्वाङ्गत्वे कर्ममीमांसापेक्षतया कर्मविचारपूर्ववृत्तत्वस्य दुस्त्यजत्वमप्युक्तम्-"एषां साधनत्वञ्च विनियोगापेक्षं,विनियोगश्च श्रुतिलिङ्गादिभ्यः सञ्चताताय" इति । यद्यपि शारीरकमीमांसायामेव अपेक्षिता श्रुतिलिङ्गादयोऽपि व्युत्पादयितुं शक्यन्ते, तथापि सङ्गतिविशेषात् सामान्यतः स्तृतीयाध्यायएव तद्व्युत्पादनं प्राप्तमिति सिद्धोपयोगमात्रमत्र कर्तव्यं, नपुनस्तद्व्युत्पादनेप्रयतितव्य । इदं च तार्तीयश्रुत्यादिसापेक्षत्वाभिमान प्रदर्शनार्थं, कथं वेदप्रामाण्यव्युत्पादनमन्तरेण तदन्तर्भूतब्रह्मविचारोऽपिस्यात्, तत्प्रामाण्यञ्च प्रथमाध्यायसाध्यं, कथञ्च सामान्यतः शास्त्राणां शास्त्रार्थानां वा द्वैतीयभेदाभावेऽनुष्ठानतादृश प्रामाण्यं प्रतिष्ठितं भवेत्,

---

त्यर्थ इत्याह ( नचेति ) ( श्रुतेति ) " शान्त उपेत " इति स्वरसतः श्रुतस्य साक्षात्साधनत्वस्य त्यागः अश्रुतस्य श्रवणसाधनत्वस्य कल्पनं चेत्यर्थः । ननु - दर्शनस्याविधेयत्वेन तदङ्गत्वासम्भवात् मनननिदिध्यासनयोश्चाङ्गत्वेन मुख्याङ्गत्वे सम्भवति तदङ्गाङ्गत्वकल्पनायोगात् श्रवणप्रत्ययाङ्गत्वमित्याह ( अविधेयेति ) किञ्च - श्रवणाङ्गत्वेऽपि फलोपकार्यङ्गत्वात् शमादेः प्राग्वृत्तत्वमित्यपि द्रष्टव्यम् । त्वन्मते दर्शनसाधनतया श्रवणविधानञ्च न सम्भवतीत्याह ( शब्दजन्येति ) श्रवणमवृत्त्यनन्तरमेव विचारेण ब्रह्मविद्याङ्गत्वमवधार्यानन्तरमेव ब्रह्मविद्याध

कत्वा विचार्येषु शास्त्रार्थविशेषेषु भेदाभेदचिन्तनकारा, तेनशब्दा न्तरादयोऽद्वैतीया विशेषतश्चिन्त्या । तार्तीयोपयोगस्तु दर्शितस्तन्त्रान्तरे भाष्ये, श्रुतिलिङ्गादेस्तत्तन्नापेक्षणात् । उद्गीथविचारे क्रत्वर्थत्वपुरुषार्थत्वा दिविमर्शस्तु तार्तीयप्रयुक्तिसापेक्ष, पोटाविभक्तपाञ्चमिकक्रमप्रमाणापेक्षिणी चार्चिरायातिवाहिकगण पौर्वापर्यव्यवस्था, कार्तृलक्षणन्यायोपजीविनी च ब्रह्मविद्याधिकारवर्णाश्रमादि धर्मविशेषस्थापना । एव ' तेषामेकैकएव तावा न्यायानसोऽपूर्वे " इत्यादिष्वप्यतिदेशादिसापेक्षत्वमनुसन्धेयम् । सूत्रकारोऽपि "तदुक्त" मित्यादिना कर्ममीमासाया सामान्यन्यायान् प्रथ मसिद्धानुदाहरतीति भवद्भिरपिव्याख्यातमेव । नचाय शारीरकेवक्तव्य मेवतन्त्रान्तरतया परोपजीवनेन दर्शयतीति वाच्यम्, तत्र तत्रैवतत्सं गते स्थापितत्वात् । नच - प्रसिद्धेर्न्याये स्वयमेववेदप्रामाण्यादिक विचारयाम किं जैमिनीयेनेतिवाच्यम् । तथापि कर्मविचारपूर्ववृ त्तत्वस्यदुष्प्रतिक्षेपत्वात, तत्रविचारसागरे परिप्लवमानाना यदिजैमिनि र्ना कर्णधारायित, सएषक्षम्यतामपराध । एवञ्च लोकोत्तरप्रज्ञेन भवता बादरायणीयमपि नादरणीयमविशेषात् । नचाय क्रमनिय मोऽर्थस्वभावादापतन् जैमिनीयो बादरायणीयोवा, येन तत्राभ्यसूयि ष्यसि । अत कार्त्स्न्येन कर्ममीमासासापेक्षत्वप्रदर्शनार्थमेव शमादिसा धनत्रयवत् स्वार्तीयापेक्षाभाषण । यद्यपीहामुत्रफलभोगविरागमुमुक्षुत्वे

---

त्वया तदनुष्ठाना त्रवस्य श्रवणात्पूर्वत्व युक्तमित्याह ( एषामिति ) विधास्यन्ते - ब्रह्मविद्याङ्गत्वेन कर्तव्यतया निरूपयिष्यन्ते । ( तत्रैवे ति ) मुख्यक्रमाद्यनुसारेण कर्मविचारपूर्वत्वे सिद्धे तत्रापेक्षिततया न्यायाना तत्रैव सङ्गतत्वादित्यर्थ । ततश्च एतदधिकारिणा तेषा न्या याना ज्ञातत्वादेवेहानिरूपण, नतु तन्द्राह्यत्वादिति भाव । ( दुष्प्र तिक्षेपत्वादिति ) मुख्यक्रमानुरोधन्यायादिति भाव । इष्टापत्ति माशङ्क्य तत्रानादरेऽपि मुख्यक्रमादिसिद्धे क्रमे नाभ्यसूया कार्येत्याह ( नचाय मिति ) नन्वेवसति मुख्यक्रमादेरेव पूर्ववृत्तत्वसाधकत्व नतु न्याय-

पूर्ववृत्तत्वेनभाषिते—( यद्यपि इहामुत्रफलभोगविरागो मुमुक्षुत्वं चे त्युभय नियतपूर्वमसाधारण सप्रयोजनाभिधान चेत्यभ्युपगच्छाम, तथोक्त भाष्ये – ) " अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्मजिज्ञासाह्यनन्तरभाविनी" ति, तथापि पुरुषप्रवृत्तिक्रमविशेषसूचनस्वारस्यात्, कर्मविचारपूर्ववृत्तत्वो क्त्यैवतयोरप्यर्थलब्धत्वात्, अनन्तस्थिरफलतया प्रथममापात प्रती तकर्माख्य प्रतिबन्धकनिवृत्तिसूचनेन निर्विघातब्रह्मविचारारम्भद्योतनात्, यज्ञादिवाक्यार्थापेक्षित पदार्थनिश्चयवत्स्वव्यजनाद्यथावस्थितब्रह्मतदुपासना दि तत्त्वावगमहेतुभूत न्यायकलापशीलनोद्भेदात् अपवर्गोपायभूतोपासनापे क्षिता नभिसंहितफलसहकारिवर्गस्वरूपनिश्चयाशोपजीवनाभिप्रायाच्च कर्मविचारस्यैव पूर्ववृत्तत्वोक्ति प्रयोजनवत्तामेतीति तामेवाद्रियामहे । अभ्यर्हित पूर्ववृत्ततया वक्तव्यमितिचेत्तर्हि मुमुक्षुत्वमेकमेव त्वयापि वक्त व्यम् । तदर्थतया पूर्वेषामुक्तिरितिचेत्तुल्यम् । प्रयोजनाधिक्य मिथ स्सम्ब न्धाभावश्च विशेष । एतेन तापत्रयाभिहतिपूर्ववृत्तत्ववादिनोपि - प्रत्युक्ता, तापत्रयाभिहतिमात्रस्य मन्त्रौषधिनीतिशास्त्रादि प्रवृत्ति साधारण्यात् । दृष्टानुश्रविकविषयवितृष्णा पर्यन्तायास्तु तस्या क र्मविचारसापेक्षत्वस्थापनात् । तथोक्त साङ्ख्यैरपि " दुःखत्रयाभिघा ता ज्जिज्ञासातदुपघातकेहेतौ । दृष्टेसापार्थाचे न्नैकान्तात्यन्ततोभावा त् ॥ दृष्टवदानुश्रविकस्सह्यविशुद्ध क्षयातिशययुक्त " इति । एव कर्मपरीक्षोपबृंहितैव सा भाष्येप्युक्ता " तापत्रयातुरै रमृतत्वाय स एव जिज्ञास्य " इति । श्रुतिश्च " परीक्ष्यलोकान् कर्मचितान् ब्रा ह्मणो निर्वेदमायात " इत्यादिका । अत " अथातोब्रह्मजिज्ञासे " त्यत्र न साधनचतुष्टयाद्यानन्तर्यं सूत्रकृदभिप्रेत, अपितु कर्मवि चारानन्तर्यमेव । तथाच वृत्तिकार " वृत्तात्कर्माधिगमादनन्तर ब्र ह्मविविदिषे " ति । अयञ्च पक्षो भास्करैरप्यङ्गीकृत । निरीश्वरमी मांसकैरपि " कृत्वाध्येतुर्निरदोष वेदार्थविज्ञानाय मीमांसारम्भ " इति

यदाद्यैः कर्मोपक्रमं शास्त्रमर्थतो ब्रह्मविचारादिरूपमित्यभ्युपगन्तव्यमे च । नच द्वादशाध्यायमात्रे शास्त्रं पर्यवसितं; शबरस्वामिप्रभृतिभिः संकर्षकाण्डांशस्य सूत्रोपादानात्, शास्त्रान्तरत्वादुपनिबद्धागमि न्वेति पक्षस्यच त्वदीयैः कैश्चिपरिग्रहादिति ।

इति श्री कवितार्किकसिंहस्य सर्वतंत्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदांताचार्यस्यकृतिषु
शतदूषण्यां साधनचतुष्टय पूर्ववृत्तत्व भंगोष्टमः ॥

---

सापेक्षताया इतिचेत, सत्यम, शास्त्रापेक्षितानां न्यायानां कर्मविचारसिद्धतया कर्मविचारस्य अथातशब्दपरामर्शं योग्यताप्रतिपादनपरत्वाद्वाप्यस्य ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधि
गत परावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणारविन्द
चरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनाम
धेयेन रामानुजदासेन विरचितायां शत
दूषणीव्याख्यायां चण्डमारुताख्यायां
साधनचतुष्टय पूर्ववृत्तत्वोक्ति
भंगोनाम
॥ अष्टमस्कन्धः ॥

श्री ।

श्रीमते रामानुजायनमः ।

श्रीमते निगमान्तमहादेशिकायनमः ।

## अथ नवमोवादः ॥

हयग्रीवसुधासिन्धु हर्षहेषाखोर्मयः ।
जयन्ति वादवेलान्तक्षित वाह्यकुदृष्टयः ॥

---

( हयग्रीवेति ) चन्द्रदर्शनजन्यहर्षेण समुद्रोर्मिप्रकर्षत्व दर्शना दत्राप्युत्कर्षत्वसिद्धये हर्षाधीनत्वमाह ( हर्षेति ) तेन दूरक्षेपो व्यज्यते, ऊर्मयोहि वेलान्ते क्षिपन्ति - हेषास्तु वेलान्तादपि क्षिपन्ति, रूपाष्यनुक्तया सुधापदेनानन्दस्य विवक्षितत्वाच्च स्वाभाविकानवधिकातिशयानन्द लाभेन चन्द्रदर्शनजन्यहर्षादतिशयो हि गम्यते, तेन प्रसिद्धोर्मिभ्योतिशयसिद्धिः । वादवेलान्तादित्यर्थः । पंचमीति योगविभागेन तपरइतिवत्समासः । वादस्य वेलात्वेन रूपणात् भाष्यकारादीनां हयग्रीवात्मक सुधासिन्धुतया तदुपदेशसूक्तेर्हेषात्वेनच रूपणं विवक्षितमिति गम्यते । उपदेशस्य वादवेलान्तात् क्षेपकत्वोक्त्या हेषात्वरूपणेनच, 'एतच्च विस्तरेणे' त्यतः प्राचीनग्रन्थस्योपदेशरूपत्वमुत्तरग्रन्थस्थशंकानां परिहारगर्भत्वं, तस्य अस्पष्टत्वंच व्यज्यते, तेन वादान्तरे ष्विव सिद्धान्ताकथनात् ग्रन्थो न पूर्णइति न भ्रमितव्यम् । सिद्धान्ताकथनेन कथानधिकारे कथानधिकारत्वत्या कथंप्रवर्तेतेति शंका परिहारमभिप्रैति । याथात्म्यसिद्धिरित्यनेन निश्शेषमेव शंका परिहृता । अयं भावः ; ॥ ॥ याथात्म्यंहि प्रमाणानां साधकत्वे प्रयोजकं । तच्चसत्वं परन्यायाततो मानमसाधकम् ॥ प्रातिभासिकमानेन व्यावहारिकसाधनं । व्यावहारिकमानेन तत्वसिद्धेर्नचान्यथा ॥ प्रातिभासिक मानेच क्वचित्सिद्धिरसत्तोनच । किन्तुमानान्तरादेव संवादाद्गैवसाधकम् ॥ स्वाप्नार्थगोचरज्ञान मनुमापकमुच्यते । तेन नरपा नपारपाणां हेतुनां

विस्तरेण कुदृष्टिमतमनुभाष्य " तदिद "मित्यादिना " न्यायानुगृहीतत्रय्यन्तप्रत्यक्षादिसकलप्रमाणवृत्त याथात्म्यविद्भिरनादरणीय " मित्यन्तेन शिष्यान् प्रत्युपदिशतो भाष्यकारस्यायं भावः, सौगतानामिव प्रच्छन्नसौगतानामपि कथायामनधिकार इति । वेदार्थसङ्ग्रहे च स्पष्टमाह— " सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तसर्वमिथ्यात्ववादिनश्च स्वपक्षस्थापकप्रमाण पारमार्थ्यानभ्युपगमादभियुक्तैर्वादानधिकार एव प्रतिपादितः, " अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः । " इति । अयमाशयः -- ॥ * ॥ यदि प्रपञ्च मिथ्यात्ववादी वादाधिकारिता । भवेन्माध्यमिकस्यापि भवेद्वादाधिकारिता ॥ तथा च ब्रह्मतत्त्वं ते निर्गुणं निष्प्रमाणकम् । कथं मध्यम बौद्धस्य निरादे

---

यप्रमाणता ॥ असाधकाभिमानस्य योग्येस्त्वमतन्नीतितः । साधकं यत्र मेणैव कथासनमनुत्तमम् ॥ प्रमाणभूतैराब्द माधिस्सन्तिदुरञ्जना । निष्कासनीयास्तेसर्वे वादगोष्ठीसमीपतः ॥ ॥ इति । 'विस्तरेणानुभाष्य शिष्यान् प्रत्युपदिशत' इत्यनेन सर्वत्र शिष्यान् प्रत्येवोपदेशाः क्रियन्ते, मायिकुतर्कैन्द्रजालैस्साविकान् कुदृष्टयो वशमानयेयु रित्यधिकारमारोप्य तैस्सह विवादाभिनये कृते शिष्याणां हृष्टताभवतीति तदभिनयः क्रियतइति सूच्यते । " परमपुरुषवरणीयताहेतुगुणविशेष विरहिणामनादि पापवासनादूषिताशेष शेमुषीकाणा ' मित्यादिना सौगतसाधारण धर्मोक्त्याऽस्याधिकारे तद्वैरप्यधिकारो भवेदिति प्रतिबन्दिरभिप्रेतेत्याह ( अयभावइति ) सर्वशून्यवादिनइत्यारभ्य शून्यवादिनइत्यन्तो वेदार्थसङ्ग्रहग्रन्थः । अभियुक्तः पूर्वैर्न्यायतत्त्वकारः । ( अनुपायत्वादिति ) प्रमाणत्रयाणां तन्मते शून्यत्वात् तन्मतेनैवानधिकारइत्यर्थः । शून्यवादिविषयस्य कथं प्रकृतसङ्गति रित्याशङ्क्याह ( अयमाशयइति ) प्रतिबन्दिस्थापकत्वात्सङ्गतिरिति भावः । मध्यमो माध्यमिकः । यदि यथानधिकारो निष्कासनीय इति मन्यसे तथापि तादृशात् त्वया कथं तन्निष्कासनमिति भावः । नापलप्यतइत्ययमा

श्रीः ।

श्रीमते रामानुजायनमः ।

श्रीमते निगमान्तमहादेशिकायनमः ।

# अथ नवमोवादः ॥

हयग्रीवसुधासिन्धु हर्षहेषाखोर्मयः ।
जयन्ति वादवेलान्तक्षित वाह्यकुदृष्टयः ॥

---

( हयग्रीवेति ) चन्द्रदर्शनजन्यहर्षेण समुद्रोर्मिप्रकटत्व दर्शना दत्राप्युत्कटत्वसिद्धये हर्षाधीनत्वमाह ( हर्षेति ) तेन दूरक्षेपो व्यज्यते, ऊर्मयोहि वेलान्ते क्षिपन्ति - हेषास्तु वेलान्तादपि क्षिपन्ति, उपाध्यतुतया सुधापदेनानन्दस्य विवक्षितत्वाच्च स्वाभाविकानवधिकातिशयानन्द लाभेन चन्द्रदर्शनजन्यहर्षादतिशयो हि गम्यते, तेन प्रसिद्धोर्मिभ्योतिशयसिद्धिः । वादवेलान्तादित्यर्थः । पंचमीति योगविभागेन तपरइतिवत्समासः । वादस्य वेलात्वेन रूपणात् भाष्यकारादीनां हयग्रीवात्मक सुधासिन्धुतया तदुपदेशसूक्तेर्हेषात्वेनच रूपणं विवक्षितमिति गम्यते । उपदेशस्य वादवेलान्तात् क्षेपकत्वोक्त्या-हेषात्वरूपणेनच, 'एतच्च विस्तरेण' त्यदः प्राचीनग्रन्थस्योपदेशरूपत्वमु-त्तरग्रन्थस्थशंकानां परिहारगर्भत्वं, तस्य अस्पष्टत्वंच व्यज्यते, तेन-वादान्तरे ष्विव सिद्धान्ताकथनात् ग्रन्थो न पूर्णइति न भ्रमितव्यम् । सिद्धान्ताकथनेन कथानधिकारे कथानधिकारकथा कथंप्रवर्ततेति शंका परिहारमभिप्रैति । याथात्म्यविद्भिरित्यनेन निश्शेषमेव शंका परिहृता । अयं भावः ; ॥ * ॥ याथात्म्यंहि प्रमाणानां साधकत्वे प्रयोजकं । तत्व-सत्वं परन्यायाततो मानमसाधकम् ॥ प्रातिभासिकमानेन व्यावहारिकसाधने । व्यावहारिकमानेन सत्वंसिद्ध्येन्नचान्यथा ॥ प्रातिभासिकमानेच भ्रान्तिसिद्धिरततोनच । किन्तुमानान्तरादेव संवादाद्वैवबाधकम् ॥ रयाप्नार्थगोचरज्ञान मनुमापरमुच्यते । तेन नरमानराख्यानां हेतूनां

विस्तरेण दुर्दृष्टिमतमनुभाष्य " तदिदं मित्यादिना " याथार्थ्यगृहीतानां च प्रत्यक्षादिसकलप्रमाणवृत्त याथात्म्यनिह्नवनादरणाय " मित्यनेन शिष्यान् प्रत्युपदिशतो भाष्यकारस्याय भाव, सौगतानामिव प्रच्छन्नसौगतानामपि कथायामनधिकार इति । वेदार्थसंग्रहेच स्पष्टमाह— " सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तसर्वस्तुमिथ्यावादिनश्च स्वपक्षस्थापकप्रमाण पारमार्थ्यानभ्युपगमादभियुक्तैर्वादानाधिकारएव प्रतिपादित, " अधिकारोनुपायत्वान्न वादे शून्यवादिन ।" इति । अयमाशय ॥ * ॥ यदिप्रपञ्च मिथ्यात्व वादी वादाधिकारिता । भवेन्मायमिकस्यापि भवेद्वादाधिकारिता ॥ तथाच ब्रह्मतत्त्वते निर्गुण निष्प्रमाणक । कथ मध्यम बौद्धस्य विवाद

---

चमप्रमाणता ॥ असाधकाभिमानस्य योग्येस्वमतनीतित । स्वान्त्व बभ्रमेणैव यथासनमनुत्तमम् ॥ प्रमाणभूपैरारूढ प्राविंसन्तिदुर जना । निष्कासनीयास्तेसव वादगोष्ठीसमीपत ॥ ॥ इति । विस्तरेणानुभाष्य शिष्यान् प्रत्युपदिशत' इत्यनेन सर्वत्र शिष्यान् प्रत्येवोपदेश क्रियते, मायिककुतर्केन्द्रजालैस्साविकान् कुदृष्टयो वशमानयतु रित्यभिकारमारोप्यतैस्सहविवादाभिनयेकृते शिष्याणा हृद्यताभवतीति तभिनय क्रियतइति सूच्यते । ' परमपुरुषवर्णीयताहेतुगुणविशेष निरहिणामनादि पापवासनादूषिताशेष शेमुषीकाणा ' मित्यादिना सौगतसाधारण धर्मत्वात्स्याधिकारे तद्वरोरप्यधिकारा भवेदिति प्रतिवन्दिरभिप्रेतेत्याह ( अयभावइति ) सवशून्यवा निइत्यारभ्य ग्रन्थवादितिइयन्तो वेदार्थसग्रहग्रन्थ । अभियुक्ता पूर्वत न्त्रयाख्यात,र । ( अनुपायत्वादिति ) प्रमाणतर्काणा तन्मते शून्यत्वात् त मतेनैवान धिकारइत्यर्थ । शून्यवादिविषयस्य कथ प्रकृतसगति रित्याशङ्क्याह ( अयमाशयइति ) प्रतिबन्दु थापकत्वात्सगतिरिति भाव । मध्यमो माध्यमिक । सहि यथानधिकारी निष्कासनीय इति मन्यसे तथापि तादृशत्वात् त्वदा कथ ननिष्कासनमिति भाव । नापरुष्यतइत्ययमा

अस्तिच सत्ताभ्युपगमेमत्यपि असिद्धिरिन्द्रादेराभासत्व । ननु प्र माणादिसत्ताभ्युपगमाभावे व्यवहारार्थैव धर्मिणोऽसिद्धिः तस्य कथ माभासत्वसाधन, कथवा सद्वचनाभास लक्षणयोगित्यादि प्रयोजका वधारणामुखेन दूषणदूष्यादि व्यवस्थापन; सर्वेषा स्थापनजाल नाना प्रमाणाधीनत्वात् ; मेव सत्ताभ्युपगममात्रेण प्रसिद्धिसिद्धैः प्र माणादिभिरस्माक व्यवहारोपपत्ते । उक्तश्चेष्टसिद्धिकारैः – ' स च, प्रसिद्धिरस्ति, अतएव व्यवहराम, किन्तु ना स्यामूलपश्याम " इति । यथाप्रमाणादीनि सद्रूपाणि स्वीकुर्वता भवता प्रमाण सा धक नतदाभासइत्यादि व्यवह्रियते तथा व्यवहारिभिरेव सर्वैः प्र माणादिसत्त्वासत्त्वचिन्तायामुदासीनै कथाप्रवर्त्यतामिति ह्यादिशा म । यदिचैव नानुमन्यसे तिष्ठामहत्वयासमारोपिते सत्तानभ्युप गमपक्षे । तथापि मांप्रति त्वदुक्तमाश्रयासिद्ध्यादिदूषण दुर्वच, दूषणहीद कथाया प्रवृत्तस्यव वाच्यम् न पुनराहरतो विहरतो वा । साच कथा कयापि मर्यादया प्रवर्तनाया, तत्र वादिप्रति वादिभ्या सत्ताभ्युपगमे तादृक्पर्यनुयोगानवकाश । उभाभ्यामसत्या

---

णयोरिति - अतद्ददूषणत दूष्यमिद नेति व्यवस्थाम्यात् , स्थापनानां बाधनानांच प्रमाणाधीनासिद्धित्वात् , प्रमाणस्यैवासत्त्वे कथ लक्षणयो गादिनिर्धारणमिति शङ्कते ( प्रमाणादीति ) ( सत्ताभ्युपगममात्रेण प्र- सिद्धिसिद्धैरिति ) व्यावहारिकैरित्यर्थः । व्यवहारे प्रमाणादीना सत्त्व मप्रयोजकमित्यभिप्रायेणेष्टसिद्धिग्रन्थ विवृणोति । ( यथेति ) किंवा त्रिमतिवादिभ्यां उभाभ्यां सत्वाभ्युपगमेन प्रवर्तिताया कथायामिद- दूषणमुच्यते ? उतो भाभ्यामसत्वाभ्युपगमेन प्रवर्तिताया ? यद्वा - एकेन सत्वमितरेण चासत्वमुपगम्यप्रवर्तिताया ? अथवोभाभ्यामपि प्रमाणादि सत्ताभ्युपगमौ दासीन्येन व्यवहार नियमे - स प्र- य बध्वा प्रवर्तितायामिति मर्यादाविभाग माभिप्रेत्य क्वापि मर्या- दाया मास्मान् प्रति दूषणो द्भावन सभव इत्याह । ( त- त्र वादिप्रतिवादिभ्यामित्यादिना ) प्रतिवन्दिमुक्त्वापरिहारान्तरमा

भ्युपगमे परस्यैव स्वस्यापि प्रसङ्ग । एकेन सत्त्वमितरेणचासत्त्व म भ्युपगम्यप्रवर्तितायामिद दूषणमुच्यते चेत्, तद्वदेव कथान्तरस्या पि प्रसक्तिरनिवार्या, कथानियमस्यचोभयाभ्युपगम प्रकारानुरोधि त्वात् । अन्यथा कस्य स्वेच्छया त्वदुक्तेपि वादमात्रेणा पि दूषणप्रसङ्गेन जयपराजयव्यवस्थाभङ्गप्रसङ्गात् । यश्चैकस्तस्या क थाया प्रमाणादिसत्त्वमिच्छति तस्यनैवानियमभयेन्तरणा । अथोभा भ्यामपि प्रमाणादिसत्त्वाभ्युपगमादासीयेन व्यवहारनियमे समय बध्वा प्रारब्धाया कथाया दूषणमिदमुच्यते । तदा स्वाभ्युपगम विरोधपर व्याघातादित स्यात् । अथ दुर्वितण्डिकेन कथा बध्वा तस्यैव दूषण न ब्रूम, अपितु शिष्यादीन् प्रति तस्य कथा नधिकार दर्शयाम इति चेन्न । शिष्यादीन् प्रत्यपि चार्वाकसौगतमायावा दिनामय दोषइति वक्तव्यम् - सच दोषो निग्रहस्थानात्मा, त स्य कथाप्रवेशाप्रवेशयो न तद्भावक्षम । नच कथामन्तरेण निग्र ह । नापि द्वितीय, सत्ताभ्युपगममन्तरेणापि प्रमाणादीना व्यवहा रहेतुत्वस्यमाध्यमिकादिषुप्रदर्शितत्वात् । अथव्यवहारहेतुत्वादेव प्रमा णादीना सत्त्व, सत्त्वाच्च तदभ्युपगम, असतोऽभ्युपगमायोगादित्युच्यते तदपिन, अस्याप्यर्थस्यकथापि नियमस्थित्याप्रवर्तिता कथामतरे णद्गमावनात् । ततश्चसिद्धासत्ताभ्युपगमापूर्वं कथाप्रवृत्ति । नचसा

---

ह ( कथानियमस्यचेति ) असत्त्वाभ्युपगन्तार प्रतिवादिन्येनाभ्युप गम्यप्रयुक्तायां कथायामसत्त्वप्रयुक्त माश्रयासिद्ध्यादिदूषण नोद्भाव नार्हमितिभाव. । अन्यथा - उभयाभ्युपगममकारयाति एकतरेन दोषो द्भावने । कस्य - कस्यचिदित्यर्थ । तस्या कथायां सत्त्वाभ्युपगमवादिन मात्रपि दोषोद्भावनं नस्यादित्यत्राह ( यश्चेत्यति ) ननु व्यवहारहे तुत्वपदत्तात्पर्येण प्रमाणादीना सत्त्वसमर्थित, हेतुत्वस्य नियतपूर्वसत्त्व रूपत्वात् तेन सत्त्वाभ्युपगमसिद्ध । असत्त्वस्यचोक्ती सत्त्वतदभा वाभ्युपगमयोर्व्याघात इति शङ्कते । ( अथेति ) ननु प्रमाणादीनि

विनियमदिवति स्सत्ताभ्युपगमगर्भेतिवाच्यम्, तत्वावधारणफलाजयोपा
यिकोभयसम्भावितव्यवहारनियमसमयबन्धमात्रेणसमीहितसिद्धे । नच
समयबन्धेपि सत्ताभ्युपगमगर्भ, प्रमाणतर्काभ्यां व्यवहर्तव्य परस्पर
प्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थान प्रदर्शनीय, तदुपपादने तदुत्तोभयो
र्व्यवहर्तव्य, अन्यथातदुपपादनासमर्थस्य, अ(न्य)स्मप्रतुजेतेतिव्यवह
र्तव्य, प्रामाणिकतयाप्रतीत पक्षस्तत्त्वमितिव्यवहर्तव्य इत्येवमादिरा
रूपेनियमबन्धेपिसत्ताभ्युपगम प्रसगाभावात्। नच समयबन्धेऽपिहेतुर्वाच्य,
सच कथाप्रवृत्तिमन्तरेण नवक्तु शक्यइति, सत्ताभ्युपगमहेतुत्वाभिधान
विषय प्रयत्नाधानप्रतिबन्धवतार, तत्त्वनिर्णयविजयमूलत्वेन लोकासि
द्धस्याविचारित रमणीयस्य व्यवहारनियमस्य हेतुमन्तरेण वादिभ्या द्वा
भ्यामपि स्वेच्छयैवग्रहणात। नचैव प्रमाणमूलत्वाभावेन विचार तद्विष
य तत्फलविप्रप्रसङ्ग, अनादिपारम्पर्यागतस्य लोकव्युत्पत्तिसवादिनस्त
स्य असम्भवाद्यथाभावाभावरूपस्वतश्शुद्धिसिद्धत्वात । नच प्रमाणादिस
चापिस्वेच्छयैवागीकार्यो, व्यवहारनियममात्रेणैवान्वयव्यतिरेकवत्तानिरपेक्षे

---

यसमयेनिबध्यन्ते नतु सत्त्वमिति कुतइतिन शङ्कासंभवइत्याह (न
चेति) यद्येवशब्दे ततश्चा दोषमाह (सचेति) सहेतुश्चसत्त्वमि
त्यर्थ । समयबन्धे प्रमाणाद्यन्वये सत्तानन्वयेच कोहेतु किमयम
यवेति सशय्य अन्यतरनिर्धारणायावाभ्यां कथाप्रवर्तनीया, तथाचात्रै
वकथायामधिकारोदुरुपपद्मइति कथान्तरेकथमनधिकार, ततश्चसत्ता
भ्युपगमस्य कथाहेतुत्वसमर्थनविषयकथाया प्रतिवादिन• प्रत्यवस्थान
यथागीक्रियते तथान्यत्रापीति याप्रतिबन्दी साहस्वेपेद्यापि प्रतिबन्दीत्या
दित्यर्थ । उपसहरति (तत्त्वनिर्णयेति) ग्रहणादित्यनन्तर नसम
यबन्धहेतुर्वाच्यइत्यध्याहार । तस्य-व्यवहारनियमस्य (असम्भवेति।
असम्भवान्यथाभावाभावरूप स्वतश्शुद्ध्यासह सिद्धत्वादित्यर्थ । स्वे
च्छयैवपूर्वनियमागीकारवदयमपि स्वच्छयासत्ताभ्युपगमस्य हेतुत्वमगी
कुर्मइत्यत्राह (नचेति) (व्यवहारनियममात्रेणेति) अनादिव्यव

